सरल सुबोध 'मणिप्रभा' हिन्दी टीका तथा 'अमरकौमुदी' संस्कृत टिप्पणीके सहित

# अमरकोष ( सम्पूर्ण ) ।

( टीकाकार—व्याकरण–साहित्याचार्य साहित्यरत्न श्रीहरगोविन्द मिश्रजी, काशी )

'मणिप्रभा' नामक हिन्दी व्याख्यामें—मूल श्लोकोंके पर्याय (नाम), सन्दिग्ध शब्दोंके शुद्ध ( प्रातिपदिकावस्थाका ) स्वरूप ( जैसे—राजा = राजन्, विद्वान् = विद्वस्, ...... ), लिङ्ग, पाठान्तर और मतान्तरके पर्याय, अन्य ग्रन्थों या कोषोंमें मिलनेवाले अतिरिक्त समानाकार बाहरी शब्द, तथा हिन्दीमें अर्थ दिये गये हैं और कठिन विषय उदाहरणादिसे विशद किये गये हैं । क्षेपक श्लोकों-की व्याख्या भी मूलके समान ही विशद रूपसे की गई है ।

'अमरकौमुदी' नामक संस्कृत टिप्पणीमें—वेद, वेदाङ्ग, स्मृति, पुराण और साहित्यादि अनेक ग्रन्थोंसे प्रमाण-वचन, पाठान्तर आदि, तथा अक्षौहिणी सेना, मन्वन्तर काल, द्रोण खारी आदि प्रमाण ( तौल ) इत्यादिके अनेक चक्र भी दिये हैं जिनसे अनेक श्लोकोंके आशय अनायास ही समझ में आ जाते हैं । परिशिष्टमें विशेष आवश्यकीय विषय तथा अन्तमें मूल, क्षेपक और समानाकार या पाठान्तर आदि बाहरी शब्दोंकी अकारादि क्रमसे सूची और ग्रन्थारम्भमें गवेषणापूर्ण विस्तृत भूमिका देकर ग्रन्थको परमोपयोगी बनाया गया है । कागज छपाई आदि सब कुछ अत्युत्तम रहनेपर भी मूल्य लागतमात्र सजिल्द पुस्तक का केवल २) ।

# अमरकोष ( प्रथमकाण्ड ) ।

**'मणिप्रभा' हिन्दी टीका अमरकौमुदी टिप्पणी सहित**

बिहारके प्रथमा परीक्षार्थियोंके लिए हमने इसके प्रथम काण्डका उपरोक्त सम्पूर्ण विषयोंसे युक्त पृथक् संस्करण भी छापा है । मूल्य ।) मात्र

# अमरकोष-मूल ( गुटका )

**अनेकार्थध्वनिमञ्जरी–द्विरूपकोश–एकाक्षरकोश सहित ।**

४॥ × ५ इंच का जेबी गुटका । मूल्य बहुत अल्प ।)

---

प्रकाशक—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।

THE

HARIDAS SANSKRIT SERIES

22

THE

# MANUSMRITI

## ( 2ND CHAPTER ONLY )

With

*The Manvarthamuktāvalī Commentary*

By

KULLUKABHAṬṬA

And

*The Subodhinī Hindi Commentary*

By

PANDIT S'RĪ JANĀRDANA S'ARMĀ

PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhambâ Sanskrit Series Office.*

Benares City.

1938

* श्रीः *

→ हरिदास-संस्कृत-ग्रन्थमाला ←

* श्रीः *

# मनुस्मृतिः

## ( द्वितीयोऽध्यायः )

श्रीकुल्लूकभट्टप्रणीतया **मन्वर्थमुक्तावल्या** पण्डित जनार्दनशर्म-प्रणीतया **सुबोधिनी**नाम्न्या हिन्दीटीकया च समलङ्कृता।

पण्डित लक्ष्मीधरपन्तधर्माधिकारिणा संशोधिता।

प्रकाशकः—

**जयकृष्णदास हरिदास गुप्तः**

**चौखम्बा संस्कृत सीरीज़ आफिस,**

बनारस सिटी।

१९३८

॥ श्रीः ॥

कुल्लुकभट्टकृतमन्वर्थमुक्तावली–पण्डित जनार्दनशर्म-
कृतसुबोधिनीनाम्नीहिन्दीटीकासहितः ।

# मनुस्मृतिः

## द्वितीयोऽध्यायः ।

गौडे नन्दनवासिनाम्नि सुजनैर्वर्ण्ये वरेण्ये कुले
विप्रो भट्टदिवाकरस्य तनयः कुल्लूकभट्टोऽभवत् ।
वृत्तिस्तेन मनुस्मृतौ शिवपुरेऽध्याये द्वितीयेऽधुना
रम्येयं क्रियते हिताय विदुषां मन्वर्थमुक्तावली ॥ १ ॥

प्रथमाध्याये प्रकृष्टपरमात्मज्ञानरूपधर्मज्ञानाय जगत्कारणं ब्रह्म प्रतिपाद्याधुना ब्रह्मज्ञानाङ्गभूतं संस्कारादिरूपं धर्मं प्रतिपिपादयिषुर्धर्मसामान्यलक्षणं प्रथममाह—

**विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।**
**हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ १ ॥**

विद्वद्भिर्वेदविद्भिः सद्भिर्धार्मिकै रागद्वेषशून्यैरनुष्ठितो हृदयेनाभिमुख्येन ज्ञात इति, अनेन श्रेयःसाधनमभिहितम् । तत्र हि स्वरसान्मनोऽभिमुखीभवति । वेदविद्भिर्ज्ञात इति विशेषणोपादानसामर्थ्याज्ज्ञातस्य वेदस्यैव श्रेयःसाधनज्ञाने कारणत्वं विवक्षितम् । खड्गधारिणा हत इत्युक्ते धृतखड्गस्यैव हनने प्राधान्यम् । अतो वेदप्रमाणकः श्रेयः-साधनं धर्म इत्युक्तम् । एवंविधो यो धर्मस्तं निबोधत । उक्तार्थसङ्ग्रहश्लोकाः—

वेदविद्भिर्ज्ञात इति प्रयुञ्जानो विशेषणम् ।
वेदादेव परिज्ञातो धर्म इत्युक्तवान्मनुः ॥
हृदयेनाभिमुख्येन ज्ञात इत्यपि निर्दिशन् ।
श्रेयः साधनमित्याह तत्र ह्यभिमुखं मनः ॥
वेदप्रमाणकः श्रेयःसाधनं धर्म इत्यतः ।
मनूक्तमेव मुनयः प्रणिन्युर्धर्मलक्षणम् ॥

अत एव हारीतः—

"अथातो धर्मं व्याख्यास्यामः। श्रुतिप्रमाणको धर्मः। श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च"। भविष्यपुराणे च—

धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्।
स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः॥
अस्य सम्यगनुष्ठानात्स्वर्गो मोक्षश्च जायते।
इह लोके सुखैश्वर्यमतुलं च खगाधिप॥

श्रेयःसाधनमित्यर्थः। जैमिनिरपि इदमपि धर्मलक्षणमसूत्रयत्—"चोदनालक्षणोऽर्थो धर्मः" इति। उभयं चोदनया लक्ष्यते, अर्थः श्रेयःसाधनं ज्योतिष्टोमादिः। अनर्थः प्रत्यवायसाधनं श्येनादिः। तत्र वेदप्रमाणकं श्रेयःसाधनं ज्योतिष्टोमादि धर्म इति सूत्रार्थः। स्मृत्यादयोऽपि वेदमूलकत्वेनैव धर्मप्रमाणमिति दर्शयिष्यामः। गोविन्दराजस्तु—हृदयेनाभ्यनुज्ञात इत्यन्तःकरणविचिकित्साशून्य इति व्याख्यातवान्। तन्मते वेदविद्भिरनुष्ठितः संशयरहितश्च धर्म इति धर्मलक्षणं स्यात्। एवं च दृष्टार्थग्रामगमनादिसाधारणं धर्मलक्षणविचक्षणा न श्रद्दधते। मेधातिथिस्तु—हृदयेनाभ्यनुज्ञात इति यत्र चित्तं प्रवर्तयतीति व्याख्याय 'अथवा हृदयं वेदः स ह्यधीतो भावनारूपेण हृदयस्थितो हृदयम् इत्युच्यते' इत्युक्तवान्॥ १॥

सुबोधिनी

रागद्वेषरहित धार्मिक पण्डितोंने जिसको सदा सेवन किया और हृदयसे मुख्य जाना, उस धर्मको तुम सुनो॥ १॥

**कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।**
**काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः॥ २॥**

फलाभिलाषशीलत्वं पुरुषस्य कामात्मता। सा न प्रशस्ता, बन्धहेतुत्वात्। स्वर्गादिफलाभिलाषेण काम्यानि कर्माण्यनुष्ठीयमानानि पुनर्जन्मने कारणं भवन्ति। नित्यनैमित्तिकानि त्वात्मज्ञानसहकारितया मोक्षाय कल्पन्ते। न पुनरिच्छामात्रमनेन निषिध्यते। तदाह—"न चैवेहास्त्यकामता" इति। यतो वेदस्वीकरणं वैदिकसकलधर्मसम्बन्धश्चेच्छाविषयावेव॥ २॥

फलकी इच्छा अच्छी नहीं होती, परन्तु इससे इच्छामात्रका त्याग नहीं है। क्योंकि वेदका स्वीकार और वैदिक कर्मोंका सम्बन्ध भी इच्छासे ही है॥ २॥

अत्रोपपत्तिमाह—

**सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः।**
**व्रतानि यमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः॥ ३॥**

अनेन कर्मणेदमिष्टं फलं साध्यत इत्येवं विषया बुद्धिः सङ्कल्पः, तदनन्तरमिष्टसाधनतयाऽवगते तस्मिन्निच्छा जायते, तदर्थं प्रयत्नं कुरुते चेत्येवं यज्ञाः सङ्कल्पप्रभवाः, व्रतानि, यमरूपाश्च धर्माश्चतुर्थाध्याये वक्ष्यमाणाः । सर्व इत्यनेन पदेन अन्येऽपि शास्त्रार्थाः सङ्कल्पादेव जायन्ते । इच्छामन्तरेण तान्यपि न सम्भवन्तीत्यर्थः । गोविन्दराजस्तु–व्रतान्यनुष्ठेयरूपाणि, यमधर्माः प्रतिषेधार्थका इत्याह ॥ ३ ॥

इच्छाकी जड़ संकल्प है, यज्ञ संकल्पोंसे उत्पन्न होते हैं और व्रत, नियम और धर्म ये सब संकल्पसे ही उत्पन्न कहे गये हैं ॥ ३ ॥

अत्रैव लौकिकं नियमं दर्शयति—

**अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित् ।**
**यद्यद्धि कुरुते किञ्चित्तत्तत्कामस्य चेष्टितम् ॥ ४ ॥**

लोके या काचिद्भोजनगमनादिक्रिया, साप्यनिच्छतो न कदाचिद् दृश्यते। ततश्च सर्वं कर्म लौकिकं वैदिकं च यद्यत्पुरुषः कुरुते तत्तदिच्छाकार्यम् ॥ ४ ॥

इस संसारमें विना इच्छा के किसी मनुष्यका कोई काम कभी नहीं दीखता । जो कुछ वह करता है, सब इच्छासे करता है ॥ ४ ॥

सम्प्रति पूर्वोक्तं फलाभिलाषनिषेधं नियमयति—

**तेषु सम्यग्वर्तमानो गच्छत्यमरलोकताम् ।**
**यथा सङ्कल्पितांश्चेह सर्वान्कामान्समश्नुते ॥ ५ ॥**
**[ असद्वृत्तस्तु कामेषु कामोपहतचेतनः ।**
**नरकं समवाप्नोति तत्फलं न समश्नुते ॥ १ ॥**
**तस्माच्छ्रुतिस्मृतिप्रोक्तं यथाविध्युपपादितम् ।**
**काम्यं कर्मेह भवति श्रेयसे न विपर्ययः ॥ २ ॥ ]**

नात्रेच्छा निषिध्यते किन्तु शास्त्रोक्तकर्मसु सम्यग्वृत्तिर्विधीयते । बन्धहेतुफलाभिलाषं विना शास्त्रीयकर्मणामनुष्ठानं तेषु सम्यग्वृत्तिः सम्यग्वर्तमानोऽमरलोकताममरधर्मकं ब्रह्मभावं गच्छति । मोक्षं प्राप्नोतीत्यर्थः । तथाभूतश्च सर्वेश्वरत्वादिहापि लोके सर्वानभिलषितान्प्राप्नोति । तथा च छान्दोग्ये—"स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" ( ८।२।१ ) इत्यादि ॥ ५ ॥

उन (शास्त्रोक्त) कामोंमें अच्छे प्रकारसे लगा हुआ मनुष्य स्वर्गलोकको पाता है और इस संसारमें भी प्राणी यथेष्ट सब कामनाओंको भोगता है ॥ ५ ॥

इदानीं धर्मप्रमाणान्याह—

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ ६ ॥**

वेद ऋग्यजुःसामाथर्वलक्षणः, स सर्वो विध्यर्थवादमन्त्रात्मा धर्ममूलं प्रमाणम् । अर्थवादानामपि विध्येकवाक्यतया स्तावकत्वेन धर्मे प्रामाण्यात् । यदाह जैमिनिः—"विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" । मन्त्रार्थवादानामपि विधिवाक्यैकवाक्यतयैव धर्मे प्रामाण्यं, प्रयोगकाले चानुष्ठेयस्मारकत्वं, वेदस्य च धर्मे प्रामाण्यं यथार्थानुभवकरणत्वरूपं न्यायसिद्धम् । स्मृत्यादीनामपि तन्मूलत्वेनैव प्रामाण्यप्रतिपादनार्थमनूद्यते । मन्वादीनां च वेदविदां स्मृतिर्धर्मे प्रमाणम् । वेदविदामिति विशेषणोपादानाद्वेदमूलत्वेनैव स्मृत्यादीनां प्रामाण्यमभिमतम् । शीलं ब्रह्मण्यतादिरूपम् । तदाह हारीतः—"ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मित्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलम्" । गोविन्दराजस्तु-शीलं रागद्वेषपरित्याग इत्याह । आचारः कम्बलवल्कलाद्याचरणरूपः, साधूनां धार्मिकाणाम् आत्मतुष्टिश्च वैकल्पिकपदार्थविषया धर्मे प्रमाणम् । तदाह गर्गः—"वैकल्पिके आत्मतुष्टिः प्रमाणम्" ॥ ६ ॥

संपूर्ण वेद, ( मनु आदि ) वेदके जाननेवालोंकी स्मृति और उनका शील, धार्मिक पुरुषोंका आचार और अपने मनका सन्तोष, ये धर्मके मूल हैं ॥ ६ ॥

वेदादन्येषां वेदमूलत्वेन प्रामाण्येऽभिहितेऽपि मनुस्मृतेः सर्वोत्कर्षज्ञापनाय विशेषेण वेदमूलतामाह—

**यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।**
**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ ७ ॥**

यः कश्चित्कस्यचिद् ब्राह्मणादेर्मनुना धर्म उक्तः स सर्वो वेदे प्रतिपादितः । यस्मात्सर्वज्ञोऽसौ मनुः सर्वज्ञतया चोत्सन्नविप्रकीर्णपठ्यमानवेदार्थं सम्यग्ज्ञात्वा लोकहितायोपनिबद्धवान् । गोविन्दराजस्तु-सर्वज्ञानमय इत्यस्य सर्वज्ञानारब्ध इव वेद इति वेदविशेषणतामाह ॥ ७ ॥

मनुजी सर्वज्ञ हैं, इससे जो कुछ जिसका धर्म वेदमें कहा गया है, वही उन्होंने कहा है ॥ ७ ॥

**सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।**
**श्रुतिप्रामाण्यतो विद्वान्स्वधर्मे निविशेत वै ॥ ८ ॥**

सर्वं शास्त्रजातं वेदार्थावगमोचितं ज्ञानं मीमांसाव्याकरणादिकज्ञानमेव चक्षुस्तेन निखिलं तद्विशेषेण पर्यालोच्य वेदप्रामाण्येनानुष्ठेयमवगम्य स्वधर्मेऽवतिष्ठेत ॥८॥

इन सबको ज्ञानरूप नेत्रोंसे भलीप्रकार देखकर और वेदके प्रमाणसे कर्तव्य जानकर निश्चय पूर्वक पण्डित अपने धर्ममें स्थित रहे ॥ ८ ॥

**श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः।**
**इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ ९ ॥**

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्मानव इह लोके धार्मिकत्वेनानुषङ्गिकीं कीर्तिं परलोके च धर्मफलमुत्कृष्टं स्वर्गापवर्गादिसुखरूपं प्राप्नोति। अनेन वास्तवगुणकथनेन श्रुतिस्मृत्युदितं धर्ममनुतिष्ठेदिति विधिः कल्प्यते ॥ ९ ॥

वेद और स्मृतिमें कहे हुए धर्मको करता हुआ मनुष्य इस संसारमें कीर्ति पाता है और मरकर परम उत्तम सुख पाता है ॥ ९ ॥

**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।**
**ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ १० ॥**

लोकप्रसिद्धसंज्ञासंज्ञिसम्बन्धानुवादोऽयं श्रुतिस्मृत्योः प्रतिकूलतर्केणामीमांस्यत्वविधानार्थं, स्मृतेः श्रुतितुल्यत्वबोधनेनाचारादिभ्यो बलवत्त्वप्रतिपादनार्थं च। तेन स्मृतिविरुद्धाचारो हेय इत्यस्य फलम्। श्रुतिर्वेदः, मन्वादिशास्त्रं स्मृतिः, ते उभे प्रतिकूलतर्कैर्न विचारयितव्ये। यतस्ताभ्यां निःशेषेण धर्मो बभौ प्रकाशतां गतः ॥१०॥

वेदको श्रुति और धर्मशास्त्र को स्मृति जानना चाहिये। यह दोनों सब विषयों में तर्करहित है, क्योंकि इनसे ही धर्म उत्पन्न हुआ है ॥ १० ॥

**योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः।**
**स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ ११ ॥**

पुनस्ते द्वे श्रुतिस्मृती द्विजोऽवमन्येत स शिष्टैर्द्विजानुष्ठेयाध्ययनादिकर्मणो निःसार्यः। पूर्वश्लोके सामान्येनामीमांस्ये इति सामान्यतो मीमांसानिषेधादनुकूलमीमांसाऽपि न प्रवर्तनीयेति भ्रमो माभूदिति विशेषयति, हेतुशास्त्राश्रयाद् वेदवाक्यमप्रमाणं वाक्यत्वाद् विप्रलम्भकवाक्यवदित्यादिप्रतिकूलतर्कावष्टम्भेन। चार्वाकादिनास्तिक इव नास्तिकः, यतो वेदनिन्दकः ॥ ११ ॥

जो द्विज उन दोनों धर्मके मूलोंका तर्कशास्त्रके सहारेसे अपमान करता है, वह वेदनिन्दक नास्तिक, साधुजनोंद्वारा (समाजसे) निकाल दिया जाना चाहिये ॥ ११ ॥

इदानीं शीलस्याचार एवान्तर्भावसम्भवाद्वेदमूलतैव तन्त्रं, न स्मृतिशीलादिप्र-

कारनियम इति दर्शयितुं चतुर्धा धर्मप्रमाणमाह—

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**
**एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ १२ ॥**

वेदो धर्मप्रमाणं स क्वचित्प्रत्यक्षः क्वचित्स्मृत्याद्यनुमित इत्येवं तात्पर्यं न तु प्रमाणपरिगणने । अत एव "श्रुतिस्मृत्युदितं धर्मम्" ( म० स्मृ० २।९ ) इत्यत्र द्वयमेवाभिहितवान् । सदाचारः शिष्टाचारः स्वस्य चात्मनः प्रियमात्मतुष्टिः ॥ १२ ॥

वेद, स्मृति, सदाचार और ( जो विषय विकल्पसे कहा गया है उसमें ) अपनी रुचिके अनुसार करना-यह चार प्रकारका, धर्मका साक्षात् लक्षण है ॥ १२ ॥

**अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।**
**धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ १३ ॥**

अर्थकामेष्वसक्तानाम् अर्थकामलिप्साशून्यानां धर्मोपदेशोऽयम् । ये त्वर्थकामसमीहया लोकप्रतिपत्त्यर्थं धर्ममनुतिष्ठन्ति न तेषां कर्मफलमित्यर्थः । धर्मं च ज्ञातुमिच्छतां प्रकृष्टं प्रमाणं श्रुतिः । प्रकर्षबोधनेन च श्रुतिस्मृतिविरोधे स्मृत्यर्थो नादरणीय इति भावः । अत एव जाबालः—

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत् सता ॥

भविष्यपुराणेऽप्युक्तम्—

श्रुत्या सह विरोधे तु बाध्यते विषयं विना ।

जैमिनिरप्याह—

विरोधे त्वनपेक्षं स्यादसति ह्यनुमानकम् ॥

श्रुतिविरोधे स्मृतिवाक्यमनपेक्ष्यमप्रमाणमनादरणीयम् । असति विरोधे मूलवेदानुमानमित्यर्थः ॥ १३ ॥

अर्थ और काममें जो आसक्त नहीं हैं, उनको धर्मज्ञान उपदेश किया जाता है और धर्मको जाननेकी इच्छा करनेवालोंके लिये वेद ही उत्तम प्रमाण हैं ॥ १३ ॥

**श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।**
**उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥ १४ ॥**

यत्र पुनः श्रुत्योरेव द्वैधं परस्परविरुद्धार्थप्रतिपादनं तत्र द्वावपि धर्मौ मनुना स्मृतौ । तुल्यबलतया विकल्पानुष्ठानविधानेन च विरोधाभावः । यस्मान्मन्वादिभ्यः पूर्वतरैरपि विद्वद्भिः सम्यक् समीचीनौ द्वावपि तौ धर्मावुक्तौ । समानन्यायतया स्मृ-

स्योरपि विरोधे विकल्प इति प्रकृतोप्रयोगस्तुल्यबलत्वाविशेषात् । तदाह गौतमः— "तुल्यबलविरोधे विकल्पः" ॥ १४ ॥

जहां दो श्रुतिका आपसमें विरोध हो, वहां वे दोनों हीं धर्म माने गये हैं । क्योंकि बुद्धिमान् पिछले ऋषियोंने उन दोनों को ही धर्म कहा है ॥ १४ ॥

अत्र दृष्टान्तमाह—

**उदितेऽनुदिते चैव समयाध्युषिते तथा ।**
**सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥ १५ ॥**
**[ श्रुतिं पश्यन्ति मुनयः स्मरन्ति तु यथास्मृति ।**
**तस्मात्प्रमाणं मुनयः प्रमाणं प्रथितं भुवि ॥ ३ ॥**
**धर्मव्यतिक्रमो दृष्टः श्रेष्ठानां साहसं तथा ।**
**तदन्वीक्ष्य प्रयुञ्जानाः सीदन्त्यपरधर्मजाः ॥ ४ ॥ ]**

सूर्यनक्षत्रवर्जितः कालः समयाध्युषितशब्देनोच्यते । उदयात्पूर्वमरुणकिरणवान्प्रविरलतारकोऽनुदितकालः । परस्परविरुद्धकालश्रवणेऽपि सर्वथा विकल्पेनाग्निहोत्रहोमः प्रवर्तते । देवतोद्देशेन द्रव्यत्यागगुणयोगाद्यज्ञशब्दोऽत्र होमे गौणः । "उदिते होतव्यम्" इत्यादिका वैदिकी श्रुतिः ॥ १५ ॥

सूर्योदयमें, अर्थात् सूर्य उदय न हो उस समयमें और जब कि तारे न दीखते हों, न सूर्य ही निकला हो, तब सर्वथा यज्ञ होता है। यह वेदकी श्रुति है (सारांश यह है कि वेदमें तीन प्रकारका विरोध है, यहां तीनों ही मानने चाहिये और जिस समय सुभीता हो, उसी समय यज्ञ करे)।१५

**निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।**
**तस्य शास्त्रेऽधिकारोऽस्मिन्ज्ञेयो नान्यस्य कस्यचित् ॥१६॥**

गर्भाधानादिरन्त्येष्टिपर्यन्तो यस्य वर्णस्य मन्त्रैरनुष्ठानकलाप उक्तो द्विजातेरित्यर्थः । तस्यास्मिन्मानवधर्मशास्त्रेऽध्ययने श्रवणेऽधिकारः न त्वन्यस्य कस्यचिच्छूद्रादेः । एतच्छास्त्रानुष्ठानं च यथाऽधिकारं सर्वै रेव कर्तव्यं, प्रवचनं त्वस्याध्यापनं व्याख्यानरूपं ब्राह्मणकर्तृकमेवेति विदुषा ब्राह्मणेनेत्यत्र व्याख्यातम् ॥ १६ ॥

जिस (वर्ण) की गर्भसंस्कारसे लेकर मरणतककी विधि वैदिक मन्त्रोंसे करने के लिए कही है, उसीका इस शास्त्रमें अधिकार जानना चाहिये, अन्यका नहीं ॥ १६ ॥

धर्मस्य स्वरूपं प्रमाणं परिभाषां चोक्त्वा इदानीं धर्मानुष्ठानयोग्यदेशानाह—

**सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।**

**तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ १७ ॥**

सरस्वतीदृषद्वत्योर्नद्योरुभयोर्मध्यं ब्रह्मावर्तं देशमाहुः। देवनदीदेवनिर्मितशब्दौ नदीदेशप्राशस्त्यार्थौ ॥ १७ ॥

सरस्वती और दृषद्वती देवनदियोंके मध्यका जो देवताओंका रचा हुआ देश है, उसको ब्रह्मावर्त कहते हैं ॥ १७ ॥

**तस्मिन्देशे य आचारः पारम्पर्यक्रमागतः।**
**वर्णानां सान्तरालानां स सदाचार उच्यते ॥ १८ ॥**
**[ विरुद्धा च विगीता च दृष्टार्थादिष्टकारणे।**
**स्मृतिर्न श्रुतिमूला स्याद्या चैषा सम्भवश्रुतिः ५ ॥ ]**

तस्मिन्देशे प्रायेण शिष्टानां सम्भवात्तेषां ब्राह्मणादिवर्णानां सङ्कीर्णजातिपर्यन्तानां य आचारः पारम्पर्यक्रमागतो न त्विदानींतनः, स सदाचारोऽभिधीयते ॥१८॥

उस देशमें सब वर्णों और वर्णसंकरोंका जो आचार परम्परासे चला आरहा है वह सदाचार कहा जाता है ॥ १८ ॥

**कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः।**
**एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः ॥ १९ ॥**

मत्स्यादिशब्दाः बहुवचनान्ता एव देशविशेषवाचकाः। पञ्चालाः कान्यकुब्जदेशाः। शूरसेनका मथुरादेशाः। एष ब्रह्मर्षिदेशो ब्रह्मावर्तात्किञ्चिदूनः ॥ १९ ॥

कुरुक्षेत्र, मत्स्य, पांचाल (पंजाब) और शूरसेन (मथुराका प्रान्तभाग) यह ब्रह्मर्षियोंके निवास योग्य देश ब्रह्मावर्त के पास है और यह देश ब्रह्मावर्त से कुछ न्यून माना गया है॥१९॥

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः ॥ २० ॥**

कुरुक्षेत्रादिदेशजातस्य ब्राह्मणस्य सकाशात्सर्वमनुष्या आत्मीयमात्मीयमाचारं शिक्षेरन् ॥ २० ॥

इन देशोंमें उत्पन्न हुए ब्राह्मणसे पृथ्वीके सब मनुष्य अपना-अपना आचार सीखें॥२०॥

**हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि।**
**प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥ २१ ॥**

उत्तरदक्षिणदिगवस्थितौ हिमवद्विन्ध्यौ पर्वतौ, तयोर्यन्मध्यं विनशनात्सरस्वत्यन्तर्धानदेशाद्यत्पूर्वं प्रयागाच्च यत्पश्चिमं स मध्यदेशनामा देशः कथितः ॥ २१ ॥

हिमवान् और विन्ध्याचलके मध्य, कुरुक्षेत्रके पूर्व और प्रयागके पश्चिमका देश मध्य देश कहा गया है ॥ २१ ॥

**आ समुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ।**
**तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥ २२ ॥**

आ पूर्वसमुद्रात् आ पश्चिमसमुद्राद्धिमवद्विन्ध्ययोश्च यन्मध्यं तमार्यावर्तदेशं पण्डिता जानन्ति । मर्यादायामयमाङ्, नाभिविधौ । तेन समुद्रमध्यद्वीपानां नार्यावर्तता । आर्या अत्रावर्तन्ते पुनःपुनरुद्भवन्तीत्यार्यावर्तः ॥ २२ ॥

पूर्व समुद्र से लेकर पश्चिम समुद्रतक और विन्ध्याचल तथा हिमाचल पर्वतोंके मध्यस्थित देशको पण्डित आर्यावर्त कहते हैं ॥ २२ ॥

**कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।**
**स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः ॥ २३ ॥**

कृष्णसारो मृगो यत्र स्वभावतो वसति न तु बलादानीतः, स यज्ञार्हो देशो ज्ञातव्यः । अन्यो म्लेच्छदेशो न यज्ञार्ह इत्यर्थः ॥ २३ ॥

जहां कृष्णसार (कालामृग) स्वभावसे विचरता है, वह देश यज्ञके योग्य जानना चाहिये, इससे अतिरिक्त अन्य म्लेच्छ देश है ॥ २३ ॥

**एतान्द्विजातयो देशान्संश्रयेरन्प्रयत्नतः ।**
**शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद् वृत्तिकर्शितः ॥ २४ ॥**

अन्यदेशोद्भवा अपि द्विजातयो यज्ञार्थत्वाददृष्टार्थत्वाच्चैतान्देशान्प्रयत्नादाश्रयेरन् । शूद्रस्तु वृत्तिपीडितो वृत्त्यर्थमन्यदेशमप्याश्रयेत ॥ २४ ॥

द्विजाति (ब्राह्मण, क्षत्रिय और वैश्य) इन्हीं देशोंमें यत्नपूर्वक निवास करें, परन्तु जीविका से दुखी शूद्र तो जिसदेशमें चाहे उसमें रहे ॥ २४ ॥

**एषा धर्मस्य वो योनिः समासेन प्रकीर्तिता ।**
**सम्भवश्चास्य सर्वस्य वर्णधर्मान्निबोधत ॥ २५ ॥**

एषा युष्माकं धर्मस्य योनिः सङ्क्षेपेणोक्ता । योनिर्ज्ञप्तिकारणं "वेदोऽखिलो धर्ममूलम्" (म० स्मृ० २-६) इत्यादिनोक्तमित्यर्थः। गोविन्दराजस्तु-इह धर्मशब्दोऽपूर्वाख्यात्मकधर्मे वर्तत इति "विद्वद्भिः सेवितः" (म० स्मृ० २।१) इत्यत्र तत्कारणे-

ऽष्टकादौ वाऽपूर्वाख्यस्य धर्मस्य योनिरिति व्याख्यातवान्। सम्भवश्चोत्पत्तिर्जगत उक्ता। इदानीं वर्णधर्माञ्छृणुत। वर्णधर्मशब्दश्च वर्णधर्माश्रमधर्मवर्णाश्रमधर्मगुणधर्म-नैमित्तिकधर्माणामुपलक्षकः। ते च भविष्यपुराणोक्ताः—

वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम्।
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा।
वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते।
वर्णधर्मः स उक्तस्तु यथोपनयनं नृप॥
यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्त्तते।
स खल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा॥
वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते।
स वर्णाश्रमधर्मस्तु मौञ्जीया मेखला यथा॥
यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते।
यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम्॥
निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते।
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा॥ २५॥

यह धर्मकी जड़ और सब जगत्‌की उत्पत्ति मैंने तुमको संक्षेपसे बतलायी, अब वर्णोंके धर्मोंको सुनो॥ २५॥

**वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।**
**कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥ २६॥**

वेदमूलत्वाद्वैदिकैः पुण्यैः शुभैर्मन्त्रप्रयोगादिकर्मभिर्द्विजातीनां गर्भाधाना-दिशरीरसंस्कारः कर्तव्यः। पावनः पापक्षयहेतुः। प्रेत्य परलोके संस्कृतस्य यागादि-फलसम्बन्धात्, इह लोके च वेदाध्ययनाद्यधिकारात्॥ २६॥

द्विजातियोंको इस लोक और परलोकमें पवित्र करनेवाले गर्भाधान आदि शरीरसं-स्कार, वेदोक्त पवित्र मन्त्रोंकी विधिसे करने चाहिये॥ २६॥

कुतः पापसम्भवो येनैषां पापक्षयहेतुत्वमत आह—

**गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।**
**बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥ २७॥**

ये गर्भशुद्धये क्रियन्ते ते गार्भाः। होमग्रहणमुपलक्षणम्, गर्भाधानादेरहो-मरूपत्वात्। जातस्य यत्कर्म मन्त्रवत्सर्पिःप्राशनादिरूपं तज्जातकर्म। चौडं चूडा-करणकर्म। मौञ्जीनिबन्धनमुपनयनम्। एतैर्बैजिकं प्रतिषिद्धमैथुनसंकल्पादिना च पैतृकरेतोदोषाद्यद्यत्पापं गार्भिकं चाशुचिमातृगर्भवासजं तद् द्विजातीनामपमृज्यते॥२७॥

गर्भ शुद्ध करनेवाले हवनों और जातकर्म, मुण्डन तथा यज्ञोपवीत इन संस्कारोंसे द्विजातियोंके गर्भ और बीजका दोष मिट जाता है ॥ २७ ॥

**स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ २८ ॥**

वेदाध्ययनेन । व्रतैर्मधुमांसवर्जनादिनियमैः । होमैःसावित्रचरुहोमादिभिः सायंप्रातर्होमैश्च । त्रैविद्याख्येन च । व्रतेष्वप्राधान्यादस्य पृथगुपन्यासः । इज्यया ब्र-चर्यावस्थायां देवर्षिपितृतर्पणरूपया । गृहस्थावस्थायां पुत्रोत्पादनेन । महायज्ञैः पञ्च-भिर्ब्रह्मयज्ञादिभिः । यज्ञैर्ज्योतिष्टोमादिभिः । ब्राह्मी ब्रह्मप्राप्तियोग्येयं तनुः तन्ववच्छिन्न आत्मा क्रियते । कर्मसहकृतब्रह्मज्ञानेन मोक्षावाप्तेः ॥ २८ ॥

वेदके पढ़नेसे, व्रतोंसे, हवनोंसे, त्रैविद्य नाम व्रतसे, देव-ऋषि-पितृ-तर्पणसे, पुत्रोंसे, महायज्ञ और यज्ञोंसे यह शरीर मोक्ष पानेके योग्य बनाया जा सकता है ॥ २८ ॥

**प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।**
**मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥ २९ ॥**

नाभिच्छेदनात्प्राक् पुरुषस्य जातकर्माख्यः संस्कारः क्रियते । तदा चास्य स्वगृह्योक्तमन्त्रैः स्वर्णमधुघृतानां प्राशनम् ॥ २९ ॥

पुरुषका जातकर्म नाल काटनेसे पहिले करना कहा है और इस ( बालक ) को मन्त्रोच्चारण पूर्वक सुवर्ण, शहद और घीका प्राशन कराया जाता है ॥ २९ ॥

**नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् ।**
**पुण्ये तिथौ मुहुर्ते वा नक्षत्रे वा गुणान्विते ॥ ३० ॥**

जातकर्मेति पूर्वश्लोके जन्मनः प्रस्तुतत्वाज्जन्मापेक्षयैव दशमे द्वादशे वाऽहनि अस्य शिशोर्नामधेयं स्वयमसम्भवे कारयेत् । अथवा—

आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते ।

इति शङ्खवचनाद्दशमेऽहन्यतीते एकादशाह इति व्याख्येयम् । तत्राप्यकरणे प्रशस्ते तिथौ प्रशस्त एव मुहूर्ते नक्षत्रे च गुणवत्येव ज्योतिषावगते कर्तव्यम् । वाशब्दोऽवधारणे ॥ ३० ॥

बालकका नामकरण जन्मसे दशवें या बारहवें दिन अथवा पुण्य तिथि या मुहूर्तमें या किसी गुणयुक्त नक्षत्रमें करावे ॥ ३० ॥

**मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।**
**वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ ३१ ॥**

ब्राह्मणादीनां यथाक्रमं मङ्गलबलधननिन्दावाचकानि शुभबलवसुदीनादीनि नामानि कर्तव्यानि ॥ ३१ ॥

ब्राह्मणका मंगलयुक्त, क्षत्रियका बलयुक्त, वैश्यका धनयुक्त और शूद्रका निन्दा युक्त युक्त नाम रखना चाहिये ॥ ३१ ॥

इदानीमुपपदनियमार्थमाह—

**शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।**
**वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥ ३२ ॥**

एषां यथाक्रमं शर्मरक्षापुष्टिप्रैष्यवाचकानि कर्तव्यानि, शर्मवर्मभूतिदासादीनि उपपदानि कार्याणि । उदाहरणानि तु-शुभशर्मा, बलवर्मा, वसुभूतिः, दीनदास इति । तथा च यमः—

'शर्म देवश्च विप्रस्य वर्म त्राता च भूभुजः ।
भूतिदत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

विष्णुपुराणेऽप्युक्तम्—

'शर्मवद्ब्राह्मणस्योक्तं वर्मेति क्षत्रसंयुतम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ ३२ ॥

ब्राह्मणका शर्मा युक्त, राजाका रक्षा ( वर्मा ) युक्त, वैश्यका पुष्टि ( गुप्त ) युक्त और शूद्रका दासयुक्त नाम रखना चाहिये ॥ ३२ ॥

**स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।**
**मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ ३३ ॥**

सुखोच्चार्यमक्रूरार्थवाचि व्यक्ताभिधेयं मनःप्रीतिजननं मङ्गलवाचि दीर्घस्वरान्तं आशीर्वाचकेनाभिधानेन शब्देनोपेतं स्त्रीणां नाम कर्तव्यम् । यथा यशोदादेवीति ॥ ३३ ॥

स्त्रियोंका सुखसे कहने योग्य, कोमल, स्पष्ट अर्थ युक्त, सुन्दर, मांगलिक, जिसके अन्तमें दीर्घ वर्ण हो और जो आशीर्वादका वाचक हो, ऐसा नाम होना चाहिये ॥ ३३ ॥

**चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।**
**षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥ ३४ ॥**

चतुर्थे मासे बालस्य जन्मगृहान्निष्क्रमणमादित्यदर्शनार्थं कार्यम् । अन्नप्राशनं च षष्ठे मासे । अथवा कुलधर्मत्वेन यन्मङ्गलमिष्टं तत्कर्तव्यं तेनोक्तकालादन्यकालेऽपिनिष्क्रमणम् । तथा च यमः—

ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ।

सकलसंस्कारशेषश्चायम् । तेन नाम्नां शर्मादिकमप्युपपदं कुलाचारेण कर्तव्यम् ॥ ३४ ॥

चौथे मासमें लड़केको घरसे बाहर निकालना चाहिये । छठे मासमें अन्नप्राशन वा जो मंगल कार्य करना हो, उसे अपने कुलकी रीतिके अनुसार करे ॥ ३४ ॥

**चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।**
**प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥ ३५ ॥**

चूडाकरणं प्रथमे वर्षे तृतीये वा द्विजातीनां धर्मतो धर्मार्थं कार्यम् , श्रुतिचोदनात् । "यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव" इति मन्त्रलिङ्गात्कुलधर्मानुसारेणायं व्यवस्थितविकल्पः । अत एवाश्वलायनगृह्यम्-"तृतीये वर्षे चौलं यथाकुलधर्मं वा" ( अ. १ खं. १७ ) ॥ ३५ ॥

सब द्विजातियोंका मुंडन, पहिले वा तीसरे वर्षमें वेदकी आज्ञासे धर्मके अनुसार करना चाहिये ॥ ३५ ॥

**गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।**
**गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ ३६ ॥**

गर्भवर्षादष्टमे वर्षे ब्राह्मणस्योपनायनं कर्तव्यम् । उपनयनमेवोपनायनम् । "अन्येषामपि दृश्यते" ( पा० सू० ६।३।१३७ ) इति दीर्घः । गर्भैकादशे क्षत्रियस्य गर्भद्वादशे वैश्यस्य ॥ ३६ ॥

ब्राह्मण गर्भसे आठवें वर्षमें, क्षत्रिय गर्भसे ग्यारहवेंमें और वैश्य गर्भसे बारहवें वर्षमें बालकका उपनयन संस्कार करे ॥ ३६ ॥

**ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।**
**राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ ३७ ॥**

वेदाध्ययनतदर्थज्ञानादिप्रकर्षकृतं तेजो ब्रह्मवर्चसं तत्कामस्य ब्राह्मणस्य गर्भपञ्चमे वर्षे उपनयनं कार्यम् । क्षत्रियस्य हस्त्यश्वादिराज्यबलार्थिनो गर्भषष्ठे । वैश्यस्य बहुकृष्यादिचेष्टार्थिनो गर्भाष्टमे, गर्भवर्षाणामेव प्रकृतत्वात् । यद्यपि बालस्य कामना न सम्भवति तथापि तत्पितुरेव तद्गतफलकामना तस्मिन्नुपचर्यते ॥ ३७ ॥

ब्रह्मतेज प्राप्त करने की इच्छा करनेवाले ब्राह्मणका पांचवें वर्षमें, बल चाहनेवाले क्षत्रियका छठेमें, और धन चाहनेवाले वैश्यका आठवें वर्षमें यज्ञोपवीत करना चाहिये ॥ ३७ ॥

**आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।**
**आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ ३८ ॥**

अभिविधावाङ्। ब्राह्मणक्षत्रियविशामुक्ताष्टमैकादशद्वादशवर्षद्वैगुण्यस्य विवक्षितत्वात् षोडशवर्षपर्यन्तं ब्राह्मणस्य सावित्र्यर्थं वचनमुपनयन नातिक्रान्तकालं भवति। क्षत्रियस्य द्वाविंशतिवर्षपर्यन्तम्। वैश्यस्य चतुर्विंशतिवर्षपर्यन्तम्। अत्र मर्यादायामाङ् केचिद्व्याख्यापयन्ति, यमवचनदर्शनात्। तथा च यमः—

पतिता यस्य सावित्री दश वर्षाणि पञ्च च।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः॥
प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः।
विवस्वतः सुतः श्रीमान्यमो धर्मार्थतत्त्ववित्॥
सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः।
हविष्यं भोजयेदन्नं ब्राह्मणान्सप्त पञ्च वा॥ ३८॥

सोलह वर्षतक ब्राह्मणकी, बाईस वर्षतक क्षत्रियकी, और चौबीस वर्षतक वैश्यकी सवित्री का अतिक्रमण नहीं होता अर्थात् इस अवस्था तक उनका जनेऊ हो सकता हैं॥ ३८॥

**अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।**
**सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥ ३९॥**

एते ब्राह्मणादयो यथाकालं यो यस्यानुकल्पिकोऽप्युपनयनकाल उक्तः षोडशवर्षादिपर्यन्तं तत्रासंस्कृतास्तदूर्ध्वं सावित्रीपतिता उपनयनहीनाः शिष्टगर्हिता व्रात्यसंज्ञाभवन्ति। संज्ञा प्रयोजनं च "व्रात्यानां याजनं कृत्वा" (म० स्मृ० ११–१९७) इत्यादिना व्यवहारासिद्धिः॥ ३९॥

यदि उचित समयपर इनका संस्कार न हो तो उस कालके अनन्तर ये तीनों सावित्रीसे पतित, शिष्टजनोंसे निन्दित और व्रात्य हो जाते हैं॥ ३९॥

**नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।**
**ब्राह्मान्यौनांश्च सम्बन्धानाचरेद्ब्राह्मणः सह॥ ४०॥**

एतैरपूतैर्व्रात्यैर्यथाविधि प्रायश्चित्तमकृतवद्भिः सह आपत्कालेऽपि कदाचिदध्यापनकन्यादानादीन् सम्बन्धान्ब्राह्मणो नानुतिष्ठेत॥ ४०॥

ब्राह्मण, इन अपवित्र व्रात्योंके साथ कभी आपत्तिमें भी नियमानुसारपठन-पाठन और विवाह आदि सम्बन्ध न करे॥ ४०॥

**कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः।**
**वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च॥ ४१॥**

कार्ष्णं इति विशेषानभिधानेऽपि मृगविशेषरुरुसाहचर्यात् "हारिणमैणेयं वा

कार्ष्णं वा ब्राह्मणस्य" इत्यापस्तम्बवचनाच्च कृष्णमृगो गृह्यते । कृष्णमृगरुरुच्छागचर्माणि ब्रह्मचारिण उत्तरीयाणि वसीरन् : "चर्माण्युत्तरीयाणि" इति गृह्यवचनात् । तथा शणक्षुमामेषलोमान्यधोभववसनानि ब्राह्मणादयः क्रमेण परिदधीरन् ॥ ४१ ॥

ब्राह्मण आदि वर्णके ब्रह्मचारियोंको चाहिये कि काला मृग, रुरु मृग और बकरा इनके चर्म और सन, रेशम और उनके वस्त्र क्रमसे धारण करें ॥ ४१ ॥

**मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।**
**क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥ ४२ ॥**

मुञ्जमयी त्रिगुणा समगुणत्रयनिर्मिता सुखस्पर्शा ब्राह्मणस्य मेखला कर्तव्या। क्षत्रियस्य मूर्वामयी ज्या धनुर्गुणरूपा मेखला । अतो ज्यात्वविनाशापत्तेस्त्रिवृत्त्वं नास्तीति मेधातिथिगोविन्दराजौ । वैश्यस्य शणसूत्रमयी । अत्र त्रैगुण्यमनुवर्तत एव, "त्रिगुणाः प्रदक्षिणा मेखलाः" इति सामान्येन प्रचेतसा त्रैगुण्याभिधानात् ॥ ४२ ॥

ब्राह्मणकी मेखला मूंजकी, तीन लड़ोंकी और चिकनी हो, क्षत्रियकी मूर्वानाम लकड़ीकी जिसकी धनुषको प्रत्यंचा बनती है, उसको और वैश्यकी सनके सूतकी मेखला बनानी चाहिये ॥ ४२ ॥

**मुञ्जालाभे तु कर्तव्याः कुशाश्मन्तकबल्वजैः ।**
**त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ ४३ ॥**

कर्तव्या इति बहुवचननिर्देशाद्ब्रह्मचारित्रयस्य प्रकृतत्वान्मुख्यालाभे त्रिष्वप्यपेक्षायाः समत्वात्कौशादीनां च तिसृणां विधानान्मुञ्जाद्यलाभ इति बोद्धव्यम् । कर्तव्या इति बहुवचनमुपपन्नतरम् । भिन्नजातिसम्बन्धितयेति ब्रुवाणस्य मेधातिथेरपि बहुवचनपाठः संमतः । मुञ्जाद्यलाभे ब्राह्मणादीनां त्रयाणां यथाक्रमं कुशादिभिस्तृणविशेषैर्मेखलाः कार्याः । त्रिगुणैकग्रन्थिना युक्तास्त्रिभिर्वा पञ्चभिर्वा । अत्र च वाशब्दनिर्देशाद्ग्रन्थीनां न विप्रादिभिः क्रमेण सम्बन्धः किंतु सर्वत्र यथाकुलाचारं विकल्पः । ग्रन्थिभेदश्चायं मुख्यामुख्यापेक्षासम्भवाद्ग्रहीतव्यः ॥ ४३ ॥

मूंज न मिले तो क्रमसे कुशा, अश्मान्त और वल्वज ( तृण ) की मेखला बनानी चाहिये और उसे तीन लड़ोंकी, एक गांठ, तीन गांठ वा पांच गांठकी बनावे ॥ ४३ ॥

**कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।**
**शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ ४४ ॥**

यदीयविन्यासविशेषस्योपवीतसंज्ञां वक्ष्यति तद्धर्मिब्राह्मणस्य कार्पासम्, क्षत्रियस्य शणसूत्रमयम्, वैश्यस्य मेषलोमनिर्मितम् । त्रिवृदिति त्रिगुणं कृत्वा ऊर्ध्ववृतं दक्षिणावर्तितम् । एतच्च सर्वत्र सम्बध्यते । यद्यपि गुणत्रयमेवोर्ध्ववृतं मनुनोक्तं

तथापि तत्त्रिगुणीकृत्य त्रिगुणं कार्यम्। तदुक्तं छन्दोगपरिशिष्टे—

ऊर्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम्।
त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥

देवलोऽप्याह—

यज्ञोपवीतं कुर्वीत सूत्राणि नव तन्तवः ॥ ४४ ॥

ब्राह्मणका जनेऊ कपासके सूतका, ऊपरको बटा हुआ और तीन लड़ों का, क्षत्रियका सनके सूतका और वैश्यका भेड़के ऊनके सूतका होना चाहिये ॥ ४४ ॥

**ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ।**
**पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥ ४५ ॥**

यद्यपि द्वन्द्वनिर्देशेन समुच्चयावगमाद्धारणमपि समुच्चितस्यैव प्राप्तं तथापि "केशान्तिको ब्राह्मणस्य दण्डः कार्यः" ( म० स्मृ० २-४६ ) इति. तथा "प्रतिगृह्येप्सितं दण्डम्" ( म० स्मृ० २-४८ ) इति विधावेकत्वस्य विवक्षितत्वात् "बैल्वः पलाशो वा दण्डः" इति वासिष्ठेविकल्पदर्शनादेकस्यैव दण्डस्य धारणविकल्पितयोरेवैकब्राह्मणसम्बन्धात्समुच्चयो द्वन्द्वेनानूद्यते ब्राह्मणादयो विकल्पेन द्वौ द्वौ दण्डौ वक्ष्यमाणकार्ये कर्तुमर्हन्ति ॥ ४५ ॥

ब्राह्मणको बेल वा ढाकका, क्षत्रियको बड़ वा खैरका, वैश्यको पीलु वा गूलरका दण्ड अपने अपने धर्मानुसार धारणकरना चाहिये ॥ ४५ ॥

**केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः।**
**ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥ ४६ ॥**

केशललाटनासिकापर्यन्तपरिमाणक्रमेण ब्राह्मणादीनां दण्डाः कर्तव्याः ॥ ४६ ॥

ब्राह्मणका केशतक, क्षत्रियका मस्तकतक और वैश्यका नासिकातक लम्बा दण्ड बनाना चाहिये ॥ ४६ ॥

**ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः।**
**अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥ ४७ ॥**

ये दण्डा अव्रणा अक्षताः शोभनदर्शनाः सवल्कला अग्निदाहरहिता भवेयुः ॥ ४७ ॥

ये सब दण्ड सीधे, बिना गांठके, देखनेमें सुन्दर, मनुष्योंको बुरे न लगनेवाले और जो अग्निमें जले हुए न हों, ऐसे और छालयुक्त होने चाहिये ॥ ४७ ॥

न च तैः प्राणिजातमुद्वेजनीयमित्याह—

**प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।**

**प्रदक्षिणं परीत्याग्निं चरेद् भैक्षं यथाविधि ॥ ४८ ॥**

उक्तलक्षणं प्राप्तुमिष्टं दण्डं गृहीत्वा आदित्याभिमुखं स्थित्वाऽग्निं प्रदक्षिणीकृत्य यथाविधि भैक्षं याचेत् ॥ ४८ ॥

ब्राह्मण आदि वर्णका ब्रह्मचारी इच्छित दण्डको लेकर, सूर्यके सामने खड़ा होकर और अग्निकी परिक्रमा करके विधिपूर्वक भिक्षा माँगे ॥ ४८ ॥

**भवत्पूर्वं चरेद् भैक्षमुपनीतो द्विजोत्तमः।**
**भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ४९ ॥**

ब्राह्मणो 'भवति भिक्षां देही'ति भवच्छब्दपूर्वं भिक्षां याचन्वाक्यमुच्चारयेत्। क्षत्रियो 'भिक्षां भवति देही'ति भवन्मध्यम्। वैश्यो 'भिक्षां देहि भवती'ति भवदुत्तरम् ॥ ४९ ॥

यज्ञोपवीत होजाने पर ब्राह्मण 'भवत्'शब्दको पहिले कहकर, क्षत्रिय 'भवत्' शब्दको मध्यमें और वैश्य 'भवत्' शब्दको अन्तमें कहकर भिक्षा मांगे अर्थात् ब्राह्मण कहे 'भवति भिक्षां देहि' क्षत्रिय कहे 'भिक्षां भवति देहि' और वैश्य 'भिक्षां देहि भवति' कहे ॥ ४९ ॥

**मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।**
**भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥ ५० ॥**

उपनयनाङ्गभूतां भिक्षां प्रथमं मातरं भगिनीं वा मातुर्वा भगिनीं सहोदरां याचेत्। या चैनं ब्रह्मचारिणं प्रत्याख्यानेन नावमन्येत। पूर्वासम्भवे उत्तरापरिग्रहः ॥५०॥

ब्रह्मचारी पहिले मातासे वा बहिनसे वा सगी मौसीसे अथवा जो उसका अपमान न करे, ऐसी किसी भी स्त्री से भिक्षा मांगे ॥ ५० ॥

**समाहृत्य तु तद्भैक्षं यावदन्नममायया।**
**निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥ ५१ ॥**

तद्भैक्षं बहुभ्य आहृत्य यावदन्नं तृप्तिमात्रोचितं गुरवे निवेद्य निवेदनं कृत्वा अमायया न कदन्नेन सदन्नं प्रच्छाद्यैवमेतद्गुरुर्ग्रहीष्यतीत्यादिमायाव्यतिरेकेण तदनुज्ञात आचमनं कृत्वा शुचिः सन् भुञ्जीत प्राङ्मुखः ॥ ५१ ॥

जितनी चाहिये उतनी उस भिक्षा लाकर निष्कपट हो गुरुको समर्पण करे और फिर आचमन करके पवित्र हो पूर्वको मुखकर भोजन करे ॥ ५१ ॥

इदानीं काम्यभोजनमाह—

**आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।**
**श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥ ५२ ॥**

आयुषे हितमन्नं प्राङ्मुखो भुङ्क्ते । आयुःकामः प्राङ्मुखो भुङ्क्त इत्यर्थः । यशसे हितं दक्षिणामुखः । श्रियमिच्छन्प्रत्यङ्मुखः । ऋतं सत्यं तत्फलमिच्छन्नुदङ्मुखो भुञ्जीत ॥ ५२ ॥

पूर्वको ओर मुख करके खाय तो आयु भोगे, दक्षिणकी ओर मुख करके खाय तो यश भोगे, पश्चिमकी ओर मुख करके खाय तो लक्ष्मी पावे और उत्तरकी ओर मुख करके खाय तो सत्यका फल प्राप्त करे ॥ ५२ ॥

[ सायं प्रातर्द्विजातीनामशनं स्मृतिनोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ ६ ॥ ]
उपस्पृश्य द्विजो नित्यमन्नमद्यात्समाहितः ।
भुक्त्वा चोपस्पृशेत्सम्यगद्भिः खानि च संस्पृशेत् ॥ ५३ ॥

'निवेद्य गुरवेऽश्नीयादाचम्य' ( म० स्मृ० २-५१ ) इति यद्यपि भोजनात्प्रागाचमनं विहितं तथाऽप्यद्भिः खानि च संस्पृशेदिति गुणविधानार्थोऽनुवादः । नित्यं ब्रह्मचर्यानन्तरमपि द्विज आचम्यान्नं भुञ्जीत । समाहितोऽनन्यमनाः भुक्त्वा चाचामेदिति । सम्यग्यथाशास्त्रम् । तेन—

प्रक्षाल्य हस्तौ पादौ च त्रिः पिबेदम्बु वीक्षितम् ।

इत्यादि दक्षाद्युक्तमपि सङ्गृह्णाति । जलेन खानीन्द्रियाणि षट् छिद्राणि च स्पृशेत्, तानि च शिरःस्थानि घ्राणचक्षुःश्रोत्रादीनि ग्रहीतव्यानि । 'खानि चोपस्पृशेच्छीर्षण्यानि" इति गौतमवचनात् । उपस्पर्शनं कृत्वा खानि संस्पृशेदिति पृथग्विधानाद्भिरभ्भक्षणमात्रमाचमनम्, खस्पर्शनादिकमितिकर्तव्यतेति दर्शितम् ॥ ५३ ॥

द्विज को चाहिए कि नित्य आचमन करके सावधान हो, अन्नका भोजन करे और भोजनके अनन्तर भली भांति आचमन ( कुल्ला ) करे और उसी गीले हाथ से छः छिद्रों का ( अर्थात् नाक, कान, नेत्रका ) स्पर्श करे ॥ ५३ ॥

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥ ५४ ॥

सर्वदा अन्नं पूजयेत्प्राणार्थत्वेन ध्यायेत् । तदुक्तमादित्यपुराणे 'अन्नं विष्णुः स्वयं प्राह" इत्यनुवृत्तौ—

प्राणार्थं मां सदा ध्यायेत्स मां सम्पूजयेत्सदा ।
अनिन्दंश्चैतदद्यात्तु दृष्ट्वा हृष्येत्प्रसीदेच्च ॥ इति ।

हेत्वन्तरमपि खेदमन्नदर्शनेन त्यजेत् । प्रतिनन्देत नित्यमस्माकमेतदस्त्वित्य-

भिधाय नन्दनं प्रतिनन्दनम् । तदुक्तमादित्यपुराणे—

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति भक्त्या स्तुवन्नमेत् ॥

सर्वदा: सर्वमन्नम् ॥ ५४ ॥

भोजनका नित्य आदर करे और उसकी निन्दा न करता हुआ भोजन करे, देखकर हर्षित हो और सर्वदा अन्न मिलनेके लिये भगवान् से प्रार्थना करे ॥ ५४॥

**पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ।**
**अपूजितं तु तद् भुक्तमुभयं नाशयेदिदम् ॥ ५५ ॥**

यस्मात्पूजितमन्नं सामर्थ्यं वीर्यं च ददाति । अपूजितं पुनरेतदुभयं नाशयति । तस्मात्सर्वदाऽन्नं पूजयेदिति पूर्वेणैकवाक्यताऽऽपन्नमिदं फलश्रवणम् । स्तुत्यर्थंसन्ध्यावन्दनादावुपात्तदुरितक्षयवन्नित्यं कामनाविषयत्वेनापि नित्यश्रुतिरावहता । नित्यश्रुतिविरोधात् फलश्रवणं स्तुत्यर्थमिति तु मेधातिथिगोविन्दराजौ ॥ ५५ ॥

क्योंकि नित्य आदरपूर्वक भोजन करने से वह अन्न बल और वीर्यको देता है और अनादरसे खाया हुआ भोजन उन दोनोंका नाश करता है ॥ ५५ ॥

**नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथाऽन्तरा ।**
**न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत् ॥ ५६ ॥**

भुक्तावशेषं कस्यचिन्न दद्यात् । चतुर्थी प्राप्तायां सम्बन्धमात्रविवक्षया षष्ठी । अनेनैव सामान्यनिषेधेन शूद्रस्याप्युच्छिष्टदाननिषेधे सिद्धे "नोच्छिष्टं न हविष्कृतम्" इति शूद्रगोचरनिषेधश्चातुर्थः स्नातकव्रतत्वार्थः । दिवासायंभोजनयोश्च मध्ये न भुञ्जीत वारद्वयेऽप्यतिभोजनं न कुर्यात् । नातिसौहित्यमाचरेदिति चातुर्थं स्नातकव्रतार्थम् । उच्छिष्टः सन् क्वचिन्न गच्छेत् ॥ ५६ ॥

किसीको उच्छिष्ट न दे और न स्वयं किसी का उच्छिष्ट खाय, दिन तथा संध्याके बीचमें न खाय ( इसीसे तीन बार भोजनका निषेध है ) अति भोजन न करे और खाकर जूंठे मुंह कहीं न जाय ॥ ५६ ॥

अतिभोजने दोषमाह—

**अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।**
**अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥ ५७ ॥**

अरोगो रोगाभावस्तस्मै हितमारोग्यम्, आयुषे हितमायुष्यम् । यस्मादतिभोजनमनारोग्यमनायुष्यं च भवति अजीर्णजनकत्वेन रोगमरणहेतुत्वात् ।

अस्वर्ग्यं च स्वर्गहेतुयागादिविरोधित्वात्। अपुण्यमितरपुण्यप्रतिपक्षत्वात्। लोकविद्विष्टं बहुभोजितया लोकैर्निन्दनात्। तस्मात्तन्न कुर्यात्॥ ५७॥

अधिक भोजन करना आरोग्य, आयु, स्वर्ग, पुण्यका नाशक और लोकनिन्दित है, इसलिये उसे त्याग दे अर्थात् अधिक भोजन न करे॥ ५७॥

**ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्।**
**कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन॥ ५८॥**

ब्राह्मादिसंज्ञेयं शास्त्रे संव्यवहारार्था स्तुत्यर्था च। न तु मुख्यं ब्रह्मदेवताकत्वं सम्भवति, अयोगरूपत्वात्। तीर्थशब्दोऽपि पावनगुणयोगात्। ब्राह्मेण तीर्थेन सर्वदा विप्रादिराचामेत्। कः प्रजापतिस्तदीयः, "तस्येदम्" (पा० सू० ४।३।१२०) इत्यण् इकारश्चान्तादेशः। त्रैदशिको देवस्ताभ्यां वा। पित्र्येण तु तीर्थेन न कदाचिदाचामेत्, अप्रसिद्धत्वात्॥ ५८॥

ब्राह्मण ब्राह्म, प्रजापति वा दैव तीर्थसे नित्य आचमन कर पित्र्य तीर्थसे कभी भी आचमन न करे॥ ५८॥

ब्राह्मादितीर्थान्याह—

**अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते।**
**कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः॥ ५९॥**

अङ्गुष्ठमूलस्याधोभागे ब्राह्मं, कनिष्ठाङ्गुलिमूले कायम्, अङ्गुलीनामग्रे दैवम्, अङ्गुष्ठप्रदेशिन्योर्मध्ये पित्र्यं तीर्थं मन्वादय आहुः। यद्यपि—

कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः।

इत्यत्र चाङ्गुलिमात्रं श्रुतं तथाऽपि स्मृत्यन्तराद्विशेषपरिग्रहः। तथा च याज्ञवल्क्यः—

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्॥ (या० स्मृ० १।१९)॥ ५९॥

अंगूठेकी जड़के नीचे ब्राह्मतीर्थ, कनिष्ठिका अंगुलीके मूलमें प्रजापतितीर्थ, अंगुलियोंके अग्रभागमें देवतीर्थ और अंगूठे तथा प्रदेशिनी के बीचमें पित्र्यतीर्थ कहा है॥ ५९॥

सामान्येनोपदिष्टस्याचमनस्यानुष्ठानक्रममाह—

**त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम्।**
**खानि चैव स्पृशेदद्भिरात्मानं शिर एव च॥ ६०॥**

पूर्वं ब्राह्मादितीर्थेन जलगण्डूषत्रयं पिबेत्। अनन्तरं संवृत्यौष्ठाधरौ वारद्वयमङ्गुष्ठमूलेन सम्मृज्यात्।

संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम्।

इति दक्षेण विशेषाभिधानात्। खानि चेन्द्रियाणि जलेन स्पृशेत्। मुखस्य सन्निधानान्मुखखान्येव। गौतमोऽप्याह-"खानि चोपस्पृशेच्छीर्षण्यानि"। "हृद्यन्तर्ज्योतिः पुरुषः" (बृह० ४।३।७) इत्युपनिषत्सु हृदयदेशत्वेनात्मनः श्रवणादात्मानं हृदयं शिरश्चाद्भिरेव स्पृशेत॥ ६०॥

पहिले जलका तीन बार आचमन करे, फिर मुखको दो बार धोवे और (नाक, कान, नेत्र, इन) छिद्रोंको, हृदयको और शिरको जलसे स्पर्श करे॥ ६०॥

**अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित्।**

**शौचेप्सुः सर्वदाचामेदेकान्ते प्रागुदङ्मुखः॥ ६१॥**

अनुष्णीकृताभिः फेनवर्जिताभिर्ब्राह्मादितीर्थेन शौचमिच्छन्नेकान्ते जनैरनाकीर्णे शुचिदेश इत्यर्थः। प्राङ्मुख उदङ्मुखो वा सर्वदाऽऽचामेत्। आपस्तम्बेन "तप्ताभिश्च कारणात्" इत्यभिधानाद् व्याध्यादिकारणव्यतिरेकेण। नाचामेत्। व्याध्यादौ तु उष्णीकृताभिरप्याचमने दोषाभावः। तीर्थव्यतिरेकेणाचमने शौचाभाव इति दर्शयितुमुक्तस्यापि तीर्थस्य पुनर्वचनम्॥ ६१॥

पवित्रताको चाहनेवाला धर्मात्मा मनुष्य एकान्तमें पूर्व या उत्तरकी ओर मुख करके जो गरम न हो और झागरहित हो, ऐसे जलसे (ब्राह्म आदि) तीर्थसे सदा आचमन करे॥६१॥

आचमनजलपरिमाणमाह—

**हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः।**

**वैश्योऽद्भिः प्राशिताभिस्तु, शूद्रः स्पृष्टाभिरन्ततः॥ ६२॥**

ब्राह्मणो हृदयगामिनीभिः, क्षत्रियः कण्ठगामिनीभिः, वैश्योऽन्तरास्यप्रविष्टाभिः कण्ठमप्राप्ताभिरपि, शूद्रो जिह्वौष्ठान्तेनापि स्पृष्टाभिरद्भिः पूतो भवति। अन्तत इति तृतीयार्थे तसिः॥ ६२॥

ब्राह्मण हृदयमें गये हुए, क्षत्रिय कंठमें गये हुए, वैश्य मुखमें गये हुए और शूद्र होठोंसे स्पर्श हुए जलसे पवित्र होता है॥ ६२॥

आचमनाङ्गतामुपवीतस्य दर्शयितुमुपवीतलक्षणं ततः प्रसङ्गेन प्राचीनावीतीत्यादिलक्षणमाह—

**उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः।**

**सव्ये प्राचीन आवीती, निवीती कण्ठसज्जने॥ ६३॥**

दक्षिणे पाणावुद्धृते वामस्कन्धस्थिते दक्षिणस्कन्धावलम्बे यज्ञसूत्रे वस्त्रे वोपवीती द्विजः कथ्यते। वामपाणावुद्धृते दक्षिणस्कन्धस्थिते वामस्कन्धावलम्बे प्राचीनावीती भण्यते। सव्ये प्राचीन आवीतीति छन्दोऽनुरोधादुक्तम्। तथा च गो-

भिलः-"दक्षिणबाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणस्कन्धमवलम्बनं भवत्येवं यज्ञोपवीती भवति, सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमवलम्बनं भवत्येवं प्राचीनावीती भवति"। निवीती कण्ठसज्जन इति शिरोऽवधाय दक्षिणपाण्यादावप्यनुद्धृते कण्ठादेव सज्जन ऋजुप्रालम्बे यज्ञसूत्रे वस्त्रे च निवीती भवति ॥ ६३ ॥

जब यज्ञोपवीत वा वस्त्र दाहिने हाथको बाहर निकालकर बायें कन्धेपर रक्खा जाय तब द्विज उपवीती ( सव्य ) कहाता है, जब बायें हाथको बाहर निकालकर दाहिने कन्धेपर रक्खा जाय तब प्राचीनावीती ( अपसव्य ) कहाता है और जब कण्ठमें पहिना जाय तब निवीती कहाता है ॥ ६३ ॥

**मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।**
**अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥ ६४ ॥**

मेखलादीनि विनष्टानि भिन्नानि छिन्नानि च जले प्रक्षिप्यान्यानि नवानि स्वस्वगृह्योक्तमन्त्रैर्गृह्णीयात् ॥ ६४ ॥

जो मेखला, मृगचर्म, दण्ड, जनेऊ और कमण्डलु कामके न रहें तो उन्हें पानीमें पधराकर मन्त्रसहित दूसरे धारण करे ॥ ६४ ॥

**केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।**
**राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥ ६५ ॥**

केशान्ताख्यो गृह्योक्तसंस्कारो "गर्भादिसंख्या वर्षाणाम्" इति बौधायनवचनाद्गर्भषोडशे वर्षे ब्राह्मणस्य, क्षत्रियस्य गर्भद्वाविंशे, वैश्यस्य ततो द्व्यधिके गर्भचतुर्विंशे कर्तव्यः ॥ ६५ ॥

केशान्त कर्म ( अर्थात् ठोड़ी बनवाना ) ब्राह्मणको सोलहवें, क्षत्रियको बाईसवें और वैश्यको चौबीसवें वर्ष में कहा है ॥ ६५ ॥

**अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।**
**संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ ६६ ॥**

इयमावृदयं जातकर्मादिक्रियाकलापः समग्र उक्तकालक्रमेण शरीरसंस्कारार्थं स्त्रीणाममन्त्रकः कार्यः ॥ ३६ ॥

स्त्रियोंको ये सब कर्म शरीरके संस्कारके लिये उचित समयपर संपूर्ण रीतिसे क्रमपूर्वक मंत्र रहित करने चाहियें ॥ ६६ ॥

अनेनोपनयनेऽपि प्राप्ते विशेषमाह—

**वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।**

**पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥ ६७ ॥**
**[ अग्निहोत्रस्य शुश्रूषा सायमुद्वासमेव च ।**
**कार्यं पत्न्या प्रतिदिनमिति कर्म च वैदिकम् ॥ ७ ॥ ]**

विवाहविधिरेव स्त्रीणां वैदिकः संस्कार उपनयनाख्यो मन्वादिभिः स्मृतः । पतिसेवैव गुरुकुले वासो वेदाध्ययनरूपः । गृहकृत्यमेव सायम्प्रातः समिद्धोमरूपोऽग्निपरिचर्या । तस्माद्विवाहादेरुपनयनस्थाने विधानादुपनयनादेर्निवृत्तिरिति ॥ ६७ ॥

स्त्रियोंके लिये विवाहकी विधि वैदिक संस्कार ( यज्ञोपवीत ) कहा गया है। पति की सेवा ही गुरुकुल में वास और घरका का कामही अग्निकी सेवा है ॥ ६७ ॥

**एष प्रोक्तो द्विजातीनामौपनायनिको विधिः ।**
**उत्पत्तिव्यञ्जकः पुण्यः, कर्मयोगं निबोधत ॥ ६८ ॥**

औपनायनिक इत्यनुशतिकादित्वादुभयपदवृद्धिः । अयं द्विजातीनामुपनयनसम्बन्धी कर्मकलाप उक्त उत्पत्तेर्द्वितीयजन्मनो व्यञ्जकः ॥ ६८ ॥

द्विजातियोंके दूसरे जन्मकी जतानेवाली यह यज्ञोपवीतकी पवित्र विधि मैंने कही, अब उसके बादके कृत्योंको सुनो ॥ ६८ ॥

इदानीमुपनीतस्य येन कर्मणा योगस्तं शृणुतेत्याह—

**उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।**
**आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥ ६९ ॥**

गुरुः शिष्यमुपनीय प्रथमम् "एका लिङ्गे गुदे तिस्रः" ( म० स्मृ० ५–१३६ ) इत्यादि वक्ष्यमाणं शौचं, स्नानाचमनाद्याचारम्, अग्नौ सायम्प्रातः समिद्धोमानुष्ठानं समन्त्रकसन्ध्योपासनविधिं च शिक्षयेत् ॥ ६९ ॥

गुरुको चाहिये कि शिष्यका जनेऊ करके पहले उसे शौच, आचार, अग्निसेव (हवन) तथा सन्ध्योपासन सिखलावे ॥ ६९ ॥

**अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।**
**ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥ ७० ॥**

अध्ययनं करिष्यमाणः शिष्यो यथाशास्त्रं कृताचमन उत्तराभिमुखः कृताञ्जलिः पवित्रवस्त्रः कृतेन्द्रियसंयमो गुरुणा अध्याप्यः । "प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा" इति गौतमवचनात्प्राङमुखस्याप्यध्ययनम् । ब्रह्माञ्जलिकृत इति "वाऽऽहिताग्न्यादिषु" (पा० सू० २।२।३७) इत्यनेन कृतशब्दस्य परनिपातः ॥ ७० ॥

सीखनेवाला जब शास्त्रकी रीतिसे आचमन कर, उत्तराभिमुख हो, ब्रह्माञ्जलि बांधकर और कोपीन धारणकर, जितेन्द्रिय हो तब पढ़ानेके योग्य होता है ॥ ७० ॥

**ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।**
**संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥ ७१ ॥**

वेदाध्ययनस्यारम्भे कर्तव्ये समापने च कृते गुरोः पादोपसङ्ग्रहणं कर्तव्यम् । हस्तौ च संहत्य संश्लिष्टौ कृत्वाऽध्येतव्यम् । स एव ब्रह्माञ्जलिः स्मृत इति पूर्वश्लोकोक्तब्रह्माञ्जलिशब्दार्थव्याकारः ॥ ७१ ॥

वेद पढ़नेके आरम्भ और अन्तमें सदा गुरुके चरण छूए और हाथ जोड़कर पढना चाहिये, यही ब्रह्माञ्जलि कहाती है ॥ ७१ ॥

**व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः ।**
**सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥ ७२ ॥**

पादोपसङ्ग्रहणं कार्यमित्यनन्तरमुक्तं, तद् व्यत्यस्तपाणिना कार्यमिति विधीयते । कीदृशो व्यत्यासः कार्य इत्यत आह-सव्येन पाणिना सव्यः पादो, दक्षिणेन पाणिना दक्षिणः पादो गुरोः स्प्रष्टव्यः । उत्तानहस्ताभ्यां चेदं पादयोः स्पर्शनं कार्यम् । यदाह पैठीनसिः-"उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत्" । दक्षिणोपरिभावेन व्यत्यासो वाऽयं, शिष्टसमाचारात् ॥ ७२ ॥

हाथोंको एर-फेर करके गुरुके चरण छूने चाहिये, बायें हाथसे बायां और दाहिने हाथसे दाहिना चरण छूना चाहिये ॥ ७२ ॥

**अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः ।**
**अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ॥ ७३ ॥**

अध्ययनं करिष्यमाणं शिष्यं सर्वदा अनलसो गुरुरधीष्व भो इति प्रथमं वदेत् । शेषे विरामोऽस्त्वित्यभिधाय विरमेन्निवर्तेत ॥ ७३ ॥

गुरु, नित्यप्रति आलस्यहीन होकर पढ़नेवाले से 'भो (शिष्य) पठ' यह कहे और 'विरम' ऐसे कह कर बन्द कर दे ॥ ७३ ॥

**ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।**
**स्रवत्यनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यति ॥ ७४ ॥**

ब्रह्मणो वेदस्याध्ययनारम्भे अध्ययनसमाप्तौ च ॐ कारं कुर्यात् । यस्मात्पूर्वं यस्योङ्कारो न कृतस्तत्स्रवति शनैः शनैर्नश्यति । यस्य पुरस्तान्न कृतस्तद्विशीर्यति अवस्थितिमेव न लभते ॥ ७४ ॥

वेदपाठके आदि और अन्तमें सदा ओंकारका उच्चारण करे, क्योंकि पूर्वमें ओंकार न कहनेसे धीरे धीरे और पीछे न कहनेसे उसी समय पाठ का विस्मरण हो जाता है॥ ७४॥

**प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः।**
**प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति॥ ७५॥**

प्राक्कूलान्प्रागग्रान्दर्भानध्यासीनः पवित्रैः कुशैः करद्वयस्थैः पवित्रीकृतः "प्राणायामास्त्रयः पञ्चदश मात्राः" इति गौतमस्मरणात्पञ्चदशमात्रैस्त्रिभिः प्राणायामैः प्रयतः। अकारादिलघ्वक्षरकालश्च मात्रा। ततोऽध्ययनार्थमोंकारमर्हति॥ ७५॥

द्विज, पूर्वकी ओर जिनका अग्रभाग हो, ऐसे कुशाओंके आसनपर बैठा हुआ (कुशाओं के बने हुए) पवित्रोंसे पवित्र और तीन प्राणायामोंसे पवित्र होकर ओंकारके उच्चारणके योग्य होता है॥ ७५॥

**अकारं चाप्युकारं च मकारं च प्रजापतिः।**
**वेदत्रयान्निरदुहद् भूर्भुवः स्वरितीति च॥ ७६॥**

"एतदक्षरमेतां च" (म० स्मृ० २-७८) इति वक्ष्यति तस्यायं शेषः। अकारमुकारं मकारं च प्रणवावयवभूतं ब्रह्मा वेदत्रयादृग्यजुःसामलक्षणाद् भूर्भुवः स्वरिति व्याहृतित्रयं च क्रमेण निरदुहदुद्धृतवान्॥ ७६॥

ब्रह्माने तीनों वेदोंसे अकार, उकार और मकार और भूर्भुवः स्वः (इन तीन व्याहृतियों) को क्रमसे निकाला है॥ ७६॥

**त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।**
**तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥ ७७॥**

तथा त्रिभ्य एव वेदेभ्य ऋग्यजुःसामभ्यस्तदित्यृच इति प्रतीकेनानूदितायाः सावित्र्याः पादं पादमिति त्रीन्पादान्ब्रह्मा चकर्ष। परमे स्थाने तिष्ठतीति परमेष्ठी॥७७॥

परमेष्ठी ब्रह्माने तीनों वेदोंसे ही 'तत्' इस सावित्रीकी ऋचाका एक एक पाद निकाला है॥ ७७॥

यत एवमतः—

**एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्।**
**सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते॥ ७८॥**

इस (ओं) अक्षर और इस व्याहृति के उच्चारण पूर्वक (सावित्री) को दोनों सन्ध्याओंमें जपता हुआ वेदपाठी ब्राह्मण वेदपाठके पुण्य–फलका भागी होता है॥ ७८॥

शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥ १७२ ॥

आमौञ्जिबन्धनादित्यनुवर्तते प्रागुपनयनाद्वेदं नोच्चारयेत् । स्वधाशब्देन श्राद्धमुच्यते । निनीयते निष्पाद्यते येन मन्त्रजातेन तद्वर्जयित्वा मृतपितृको नवश्राद्धादौ मन्त्रं नोच्चारयेत् । तद्व्यतिरिक्तं वेदं नोदाहरेत् । यस्माद्यावद्वेदे न जायते तावदसौ शूद्रेण तुल्यः ॥ १७२ ॥

जब तक यज्ञोपवीत न हो जाय तब तक स्वधा नियमके अतिरिक्त अर्थात् श्राद्धमन्त्रोंके सिवाय वेदमन्त्रका नहीं उच्चारण करे, क्योंकि जब तक वह वेदमें अधिकारी नहीं होता तबतक शूद्रके समान माना जाता है ॥ १७२ ॥

कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ॥ १७३ ॥

यस्मादस्य माणवकस्य "समिधमाधेहि" ( गृ० सू० १।२२।६ ) "दिवा मा स्वाप्सीः" ( गृ० सू० १।२२।२ ) इत्यादिव्रतादेशनं वेदस्याध्ययनं मन्त्रब्राह्मणक्रमेण "अध्येष्यमाणस्त्वाचान्तः" ( अ० २ श्लो० ७० ) इत्यादिविधिपूर्वकमुपनीतस्योपदिश्यते, तस्मादुपनयनात्पूर्वं न वेदमुदाहरेत् ॥ १७३ ॥

व्रतों का उपदेश और वेद-पाठ, यज्ञोपवीतके अनन्तर क्रमसे विधिपूर्वक कहे गये हैं ॥ १७३ ॥

यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ १७४ ॥

यस्य ब्रह्मचारिणो यानि चर्मसूत्रमेखलादण्डवस्त्राण्युपनयनकाले गृह्येण विहितानि, गोदानादिव्रतेष्वपि तान्येव नवानि कर्तव्यानि ॥ १७४ ॥

सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन् ।
सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥ १७५ ॥

ब्रह्मचारी गुरुसमीपे वसन्निन्द्रियसंयमं कृत्वाऽनुगतादृष्टवृद्ध्यर्थमिमान्नियमाननुतिष्ठेत् ॥ १७५ ॥

ब्रह्मचारी के लिये चर्म, सूत्र, मेखला, दण्ड और वस्त्र यज्ञोपवीत में कहा है, वही उसके व्रतोंमें होना चाहिये । ब्रह्मचारी गुरुके यहां रहता हुआ अपना तप बढ़ाने के लिये इन्द्रियोंके समूहको अच्छी भांति रोककर इन नियमोंका पालन करे ॥ १७४-१७५ ॥

नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।

**देवताऽभ्यर्चनं चैव समिदाधानमेव च ॥ १७६ ॥**

प्रत्यहं स्नात्वा देवर्षिपितृभ्य उदकदानं, प्रतिमाऽऽदिषु हरिहरादिदेवपूजनं, सायं प्रातश्च समिद्धोमं कुर्यात्। यस्तु गौतमीये स्नाननिषेधो ब्रह्मचारिणः, स सुखस्नानविषयः। अत एव बौधायनः—"नाप्सु श्लाघमानः स्नायात्"। विष्णुनाऽत्र "कालद्वयमभिषेकाग्निकार्यकरणमप्सु दण्डवन्मज्जनम्" इति ब्रुवाणेन वारद्वयं स्नानमुपदिष्टम् ॥ १७६ ॥

ब्रह्मचारी को चाहिए नित्य स्नानसे शुद्ध होकर देव, ऋषि, पितृतर्पण और देवताओंका पूजन तथा अग्निहोत्र करे ॥ १७६ ॥

**वर्जयेन्मधु मांसं च गन्धं माल्यं रसान्स्त्रियः।**
**शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥ १७७ ॥**

क्षौद्रं मांसं च न खादेत्। गन्धं च कर्पूरचन्दनकस्तूरिकादि वर्जयेत्। एषां च गन्धानां यथासम्भवं भक्षणमनुलेपनं च निषिद्धम्। माल्यं च न धारयेत्। उद्रिक्तरसांश्च गुडादीन्न खादेत्। स्त्रियश्च नोपेयात्। यानि स्वभावतो मधुरादिरसानि कालवशेनोदकवासादिना चाम्लयन्ति तानि शुक्तानि न खादेत्। प्राणिनां हिंसां न कुर्यात् ॥ १७७ ॥

शहद, मांस, सुगन्धित वस्तु, फूलों के हार, स्त्री, सिरके की भांति बनी हुई कोई वस्तु और प्राणियों की हिंसा, इन कर्मों को त्याग दे ॥ १७७ ॥

**अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम्।**
**कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥ १७८ ॥**

तैलादिना शिरःसहितदेहमर्दनलक्षणं, कज्जलादिभिश्च चक्षुषोरञ्जनं, पादुकायाश्छत्रस्य च धारणं, कामं मैथुनातिरिक्तविषयाभिलाषातिशयं, मैथुनस्य स्त्रिय इत्यनेनैव निषिद्धत्वात्। क्रोधलोभनृत्यगीतवीणापणवादि वर्जयेत् ॥ १७८ ॥

उबटन लगाना, आंखोंका आंजन, जूते तथा छतरी धारण करना, काम, क्रोध, लोभ नाचना, गाना बजाना, इनको भी त्याग दे ॥ १७८ ॥

**द्यूतं च जनवादं च परिवादं तथाऽनृतम्।**
**स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥ १७९ ॥**

अक्षक्रीडां, जनैः सह निरर्थकवाक्कलहं, परस्य दोषवादं, मृषाऽभिधानं, स्त्रीणां च मैथुनेच्छया सानुरागेण प्रेक्षणालिङ्गनं, परस्य चापकारं वर्जयेत् ॥ १७९ ॥

जुआ, झगड़ा, निन्दा तथा झूठ, स्त्रियोंको देखना, आलिङ्गन करना और पराया तिरस्कार करना, इन कामों को ब्रह्मचारी नहीं करे ॥ १७९ ॥

**एकः शयीत सर्वत्र न रेतः स्कन्दयेत्कचित् ।**
**कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥ १८० ॥**

सर्वत्र नीचशय्यादावेकाकी शयनं कुर्यात् । इच्छया न स्वशुक्रं पातयेत् । यस्मादिच्छया स्वमेहनाच्छुक्रं पातयन्स्वकीयव्रतं नाशयति । व्रतलोपे चावकीर्णिप्रायश्चित्तं कुर्यात् ॥ १८० ॥

सब जगह अकेला सोवे, वीर्यको कभी कहीं भी नहीं गिरावे, कामसे वीर्यको गिराता हुआ ब्रह्मचारी अपने व्रतका नाश करता है ॥ १८० ॥

**स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।**
**स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥ १८१ ॥**

ब्रह्मचारी स्वप्नादावनिच्छया रेतः सिक्त्वा कृतस्नानश्चन्दनाद्यनुलेपनपुष्पधूपादिभिः सूर्यमभ्यर्च्य "पुनर्मामैत्विन्द्रियम्" इत्येतामृचं वारत्रयं पठेत् । इदमत्र प्रायश्चित्तम् ॥ १८१ ॥

ब्रह्मचारी ब्राह्मण स्वप्नमें अनजाने वीर्यको गिराकर स्नान करे और सूर्यकी पूजा कर 'पुनर्मामैत्विन्द्रियं' इस ऋचाका तीन वार पाठ करे ॥ १८१ ॥

**उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् ।**
**आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत् ॥ १८२ ॥**

जलकलशपुष्पगोमयमृत्तिकाकुशान्यावदर्थानि यावद्भिः प्रयोजनानि आचार्यस्य तावन्त्याचार्यार्थमाहरेत् । अत एवोदकुम्भमित्यत्रैकत्वमप्यविवक्षितम् । प्रदर्शनं चैतत् । अन्यदप्याचार्योपयुक्तमुपाहरेद् भैक्षं च प्रत्यहमर्जयेत ॥ १८२ ॥

पानीका घड़ा, फूल, गोबर, मिट्टी और कुशा, इनको जितना कामके लिये चाहिये, उतना ही लावे और नित्य भिक्षा मांगे ॥ १८२ ॥

**वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।**
**ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥ १८३ ॥**

वेदयज्ञैश्चात्यक्तानां स्वकर्मसु दक्षाणां गृहेभ्यः प्रत्यहं ब्रह्मचारी सिद्धान्नभिक्षासमूहमाहरेत् ॥ १८३ ॥

ब्रह्मचारी को चाहिये कि जो वेद और यज्ञोंसे रहित नहीं और अपने कर्मोंमें सावधान हैं, उनके घरोंसे पवित्र होकर नित्य भिक्षा माँग लावे ॥ १८३ ॥

**गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।**
**अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥ १८४ ॥**

आचार्यस्य सपिण्डेषु, बन्धुषु, मातुलादिषु च न भिक्षेत । तद्गृहव्यतिरिक्त-भिक्षायोग्यगृहाभावे चोक्तेभ्यः पूर्वं पूर्वं वर्जयेत । ततश्च प्रथमं बन्धून्भिक्षेत । तत्रालाभे ज्ञातीन् । तत्रालाभे गुरोरपि ज्ञातीन् भिक्षेत ॥ १८४ ॥

गुरुके कुलमें और ज्ञाति, कुल तथा बन्धुओंमें भी भिक्षा न मांगे । दूसरे के घर न मिलनेपर पहिला पहिला त्याग दे, अर्थात् प्रथम कुल बन्धुओंमें भिक्षा मांगे, वहां न मिले तो ज्ञातिमें और जो ज्ञातिमें भी न मिलसके तो गुरुके कुलमें भी मांग सकता है ॥ १८४ ॥

**सर्वं वाऽपि चरेद् ग्रामं पूर्वोक्तानामसम्भवे ।**
**नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत् ॥ १८५ ॥**

पूर्वं "वेदयज्ञैरहीनानाम्" ( अ० २ श्लो० १८३ ) इत्यनेनोक्ताना-मसम्भवे सर्वं वा ग्राममुक्तगुणरहितमपि शुचिर्मौनी भिक्षेत । महापातकाद्यभिशस्तां-स्त्यजेत् ॥ १८५ ॥

पहिले गिनाये हुए लोगों का अभाव हो तो वाणी को काबू में करके और पवित्र हो कर सब गांवमें भिक्षाके लिये फिरे, परन्तु वहां भी पातकियोंको छोड़ दे ॥ १८५ ॥

**दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।**
**सायम्प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ १८६ ॥**

दूरादिग्भ्यः परिगृहीतवृक्षेभ्यः समिध आनीय आकाशे धारणाशक्तः पट-लादौ स्थापयेत् । ताभिश्च समिद्भिः सायम्प्रातरनले होमं कुर्यात् ॥ १८६ ॥

दूरसे समिधा लाकर किसी खुले स्थान में रक्खे और आलस्यरहित होकर उनसे सांझ सबेरे अग्निमें हवन करे ॥ १८६ ॥

**अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।**
**अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ १८७ ॥**

भिक्षाहारं, सायम्प्रातः समिद्धोमम्, अरोगो नैरन्तर्येण सप्तरात्रमकृत्वा लुप्तव्रतो भवति । ततश्चावकीर्णिप्रायश्चित्तं कुर्यात् ॥ १८७ ॥

**भैक्षेण वर्तयेन्नित्यं नैकान्नादी भवेद् व्रती ।**
**भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥ १८८ ॥**

[ न भैक्ष्यं परपाकः स्यान्न च भैक्ष्यं प्रतिग्रहः ।
सोमपानसमं भैक्ष्यं तस्माद् भैक्षेण वर्तयेत् ॥ ९ ॥
भैक्षस्यागमशुद्धस्य प्रोक्षितस्य हुतस्य च ।
यांस्तस्य ग्रसते ग्रासांस्ते तस्य क्रतुभिः समाः ॥१०॥ ]

ब्रह्मचारी न एकान्नमद्यात्, किन्तु बहुगृहाहृतभिक्षासमूहेन प्रत्यहं जीवेत् । यस्माद्भिक्षासमूहेन ब्रह्मचारिणो वृत्तिरुपवासतुल्या मुनिभिः स्मृता ॥ १८८ ॥

व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयाद् व्रतमस्य न लुप्यते ॥ १८९ ॥

पूर्वनिषिद्धस्यैकान्नभोजनस्यायं प्रतिप्रसवः । देवदैवत्ये कर्मणि देवतोद्दे-शेनाभ्यर्थितो ब्रह्मचारी व्रतवदिति व्रतविरुद्धमधुमांसादिवर्जितमेकस्याप्यन्नं यथे-प्सितं भुञ्जीत । अथ पित्रुद्देशेनाभ्यर्थितो भवति तदा ऋषिर्यतिः सम्यग्दर्शनसम्प-न्नत्वात्स इव मधुमांसवर्जितमेकस्याप्यन्नं यथेप्सितं भुञ्जीत इति स एवार्थो वैद-ध्येनोक्तः, तथाऽपि भैक्षवृत्तिनियमरूपं व्रतमस्य लुप्तं न भवति । याज्ञवल्क्योऽपि श्राद्धेऽभ्यर्थितस्यैकान्नभोजनमाह—

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ (या॰ स्मृ॰ १-३२) इति ।

विश्वरूपेण तु "व्रतमस्य न लुप्यते" इति पश्यता ब्रह्मचारिणो मांसभक्षणम-नेन मनुवचनेन विधीयत इति व्याख्यातम् ॥ १८९ ॥

नीरोग ब्रह्मचारी विना भिक्षा मांगे और अग्निमें विना समिधा का होम किये यदि सात रात्रितक रहे तो 'अवकीर्णि' नाम व्रत करे । ब्रह्मचारी नित्य भिक्षा मांगे, किसी एक मनु-ष्यका अन्न खानेवाला न बने । ब्रह्मचारीको भिक्षासे आजीविका करना उपवासके समान कहा है । ब्रह्मचारी देवताओंके कर्ममें व्रतके समान और पितरों के कर्ममें ऋषिके समान, न्यौता हुआ इच्छापूर्वक भोजन करे, इससे व्रतका लोप नहीं होता ॥ १८७-१८८-१८९ ॥

ब्राह्मणस्यैव कर्मैतदुपदिष्टं मनीषिभिः ।
राजन्यवैश्ययोस्त्वेवं नैतत्कर्म विधीयते ॥ १९० ॥

ब्राह्मणक्षत्रियविशां त्रयाणामेव ब्रह्मचारिणां भैक्षाचरणविधानात् "व्रतवत्" (म॰स्मृ॰ २-१८९ ) इत्यनेन तदपवादरूपमेकान्नभोजनमुपदिष्टं क्षत्रियवैश्ययोरपि पुनरुक्तेन पर्युदस्यते । एतदैकान्नभोजनरूपं कर्म तद् ब्राह्मणस्यैव वेदार्थविद्भिर्विहितं, क्षत्रियवैश्ययोः पुनर्न चैतत्कर्मेति ब्रूते ॥ १९० ॥

पण्डितोंने यह कर्म ( यानी श्राद्ध-भोजन कर्म ) ब्राह्मण के लिए ही कहा है, क्षत्रिय-वैश्योंके लिये इसप्रकारके कर्मका विधान नहीं है ॥ १९० ॥

**चोदितो गुरुणा नित्यमप्रचोदित एव वा ।**
**कुर्यादध्ययने यत्नमाचार्यस्य हितेषु च ॥ १९१ ॥**

आचार्येण प्रेरितो न प्रेरितो वा स्वयमेव प्रत्यहमध्ययने गुरुहितेषु चोद्योगं कुर्यात् ॥ १९१ ॥

गुरु प्रेरणा करे या न करे, ब्रह्मचारी पढ़नेमें और गुरुके हितमें नित्य यत्न करे॥१९१॥

**शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च ।**
**नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥ १९२ ॥**

देहवाग्बुद्धीन्द्रियमनांसि नियम्य कृताञ्जलिर्गुरुमुखं पश्यंस्तिष्ठेन्नोपविशेत् ॥ १९२ ॥

**नित्यमुद्धृतपाणिः स्यात्साध्वाचारः सुसंयतः ।**
**आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ १९३ ॥**

सततमुत्तरीयाद्बहिष्कृतदक्षिणबाहुः, शोभनाचारः वस्त्रावृतदेहः, आस्यतामिति गुरुणोक्तः सन् गुरोरभिमुखं यथा भवति तथा आसीत ॥ १९३ ॥

शरीर, वाणी, ज्ञानेन्द्रिय और मन, इनको अपने वशमें करके हाथ जोड़े, गुरुके मुखको देखता हुआ खड़ा रहे। नित्य ओढ़नेके वस्त्रसे हाथको बाहर निकाले रहे, सुन्दर आचरण रक्खे, वस्त्रसे देहको ढके रहे और जब गुरु कहें कि 'बैठ जाओ' तब उनके सामने बैठे ॥ १९२-१९३ ॥

**हीनान्नवस्त्रवेषः स्यात्सर्वदा गुरुसन्निधौ ।**
**उत्तिष्ठेत्प्रथमं चास्य चरमं चैव संविशेत् ॥ १९४ ॥**

सर्वदा गुरुसमीपे गुर्वपेक्षया त्वपकृष्टान्नवस्त्रप्रसाधनो भवेत् । गुरोश्च प्रथमं रात्रिशेषे शयनादुत्तिष्ठेत्, प्रदोषे च गुरौ सुप्ते पश्चाच्छयीत ॥ १९४ ॥

गुरुके सामने सदा सामान्य अन्न, वस्त्र और वेशसे रहे। गुरुके पहिले उठे और पीछे सोवे ॥ १९४ ॥

**प्रतिश्रवणसम्भाषे शयानो न समाचरेत् ।**
**नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥ १९५ ॥**

( म० ) प्रतिश्रवणमाज्ञाऽङ्गीकरणं, सम्भाषणं च गुरोः शय्यायां सुप्तः, आसनोपविष्टो, भुञ्जानः, तिष्ठन् , विमुखश्च न कुर्यात ॥ १९५ ॥

( सु० ) सोता, बैठा, भोजन करता, खड़ा और मुंह फेरे हुए गुरुकी किसी आज्ञाका स्वीकार और उनसे वार्तालाप नहीं करे ॥ १९५ ॥

कथं तर्हि कुर्यात् ? तदाह—

**आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः ।**
**प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥ १९६ ॥**

आसनोपविष्टस्य गुरोराज्ञां ददतः स्वयमासनादुत्थितः, तिष्ठतो गुरोरादिशतस्तदभिमुखं कतिचित्पदानि गत्वा यथा गुरुरागच्छति तथाऽप्यभिमुखं गत्वा, यदा तु गुरुर्धावन्नादिशति तदा तस्य पश्चाद्धावन्प्रतिश्रवणसम्भाषे कुर्यात ॥ १९६ ॥

बैठे हुए गुरुको खड़े होकर, खड़े हुए के सामने जाकर, आते हुएके कई पैर आगे बढ़कर और दौड़ते हुएके पीछे दौड़कर उनसे बातचीत करे ॥ १९६ ॥

**पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम् ।**
**प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥ १९७ ॥**

पराङ्मुखस्य वाऽऽदिशतः सम्मुखस्थो, दूरस्थस्य गुरोः समीपमागत्य, शयानस्य गुरोः प्रणम्य प्रह्वो भूत्वा, निदेशे निकटेऽवतिष्ठतो गुरोरादिशतः प्रह्वीभूयैव प्रतिश्रवणसम्भाषे कुर्यात् ॥ १९७ ॥

यदि गुरु मुंह फेरे हों तो उनके सामने जाकर, दूर हों तो पास जाकर, सोते और बैठे हों तो प्रणाम करने के अनन्तर वार्तालाप करे ॥ १९७ ॥

**नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ ।**
**गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ १९८ ॥**

गुरुसमीपे चास्य गुरुशय्यासनापेक्षया नीचे एव शय्यासने नित्यं स्याताम् । यत्र च देशे समासीनं गुरुः पश्यति, न तत्र यथेष्टचेष्टां चरणप्रसारादिकां कुर्यात् ॥१९८॥

गुरुके समीप अपना पलँग और आसन सदा नीचा रखे और गुरुकी आंखों के सामने मनमाने आसनसे न बैठे ॥ १९८ ॥

**नोदाहरेदस्य नाम परोक्षमपि केवलम् ।**
**न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ १९९ ॥**
**[ परोक्षं सत्कृपापूर्वं प्रत्यक्षं न कथञ्चन ।**

दुष्टानुचारी च गुरोरिह वाऽमुत्र चैत्यधः ॥ ११ ॥]

अस्य गुरोः परोक्षमपि उपाध्यायाचार्यादिपूजावचनोपपदशून्यं नाम नोच्चारयेत्। न तु गुरोर्गमनभाषितचेष्टितान्यनुकुर्वीत। गुरुगमनादिसदृशान्यात्मनो गमनादीन्युपहासबुद्ध्या न कुर्वीत ॥ १९९ ॥

गुरुके पीठ पीछे भी उनका खाली नाम न ले और उनकी गति, बोलचाल तथा चेष्टाकी नकल न करे ॥ १९९ ॥

गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ २०० ॥

विद्यमानदोषस्याभिधानं परीवादः, अविद्यमानदोषाभिधानं निन्दा। यत्र देशे गुरोः परीवादो निन्दा च वर्तते, तत्र स्थितेन शिष्येण कर्णौ हस्तादिना तिरोधातव्यौ तस्माद्वा देशाद् देशान्तरं गन्तव्यम् ॥ २०० ॥

जहां गुरुकी बुराई या निन्दा हो रही हो, वहां कानोंको बन्द कर लेना वा वहांसे चल देना चाहिये ॥ २०० ॥

इदानीं शिष्यकर्तृकपरीवादकृतफलमाह—

परीवादात्खरो भवति श्वा वै भवति निन्दकः।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥ २०१ ॥

गुरोः परीवादाच्छिष्यो मृतः खरो भवति। गुरोर्निन्दकः कुक्कुरो भवति। परिभोक्ता अनुचितेन गुरुधनेनोपजीवकः कृमिर्भवति। मत्सरी गुरोरुत्कर्षासहनः कीटो भवति। कीटः कृमिभ्यः किञ्चित् स्थूलो भवति ॥ २०१ ॥

शिष्य गुरुकी बुराईसे गधा, निन्दासे कुत्ता, उनके धन भोगनेसे कृमि और उनके साथ ईर्षा करने से कीट योनिको प्राप्त होता है ॥ २०१ ॥

दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः।
यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥ २०२ ॥

दूरस्थः शिष्योऽन्यं नियुज्य माल्यवस्त्रादिना गुरुं नार्चयेत। स्वयं गमनाशक्तौ त्वदोषः। क्रुद्धः कामिनीसमीपे च स्थितं स्वयमपि नार्चयेत। यानासनस्थश्च शिष्यो यानासनादवतीर्य गुरुमभिवादयेत्। यानासनस्थश्चैवैनं प्रत्युत्थायेत्यनेन यानासनादुत्थानं विहितमनेन तु यानासनत्याग इत्यपुनरुक्तिः ॥ २०२ ॥

शिष्य दूरसे, क्रुद्ध होकर, या स्त्रीके पास बैठा हुआ गुरुका पूजन न करे और यदि सवारीपर बैठा हो तो उतरकर गुरुको प्रणाम करे ॥ २०२ ॥

प्रतिवातेऽनुवाते च नासीत गुरुणा सह ।
असंश्रवे चैव गुरोर्न किञ्चिदपि कीर्तयेत् ॥ २०३ ॥

प्रतिगतोऽभिमुखीभूतः शिष्यस्तदा गुरुदेशाच्छिष्यदेशमागच्छति स प्रतिवातः, यः शिष्यदेशाद् गुरुदेशमागच्छति सोऽनुवातः, तत्र गुरुणा समं नासीत । तथाऽविद्यमानः संश्रवो यत्र तस्मिन्नसंश्रवे, गुरुर्यत्र न शृणोतीत्यर्थः । तत्र गुरुगतमन्यगतं वा न किञ्चित्कथयेत् ॥ २०३ ॥

जहां गुरुके बैठनेके प्रदेशसे शिष्यके बैठनेके प्रदेशको वायु चलती हो और शिष्यके बैठनेके प्रदेशसे गुरुके बैठनेके प्रदेशको चलती हो, वहां गुरुके साथ न बैठे और जहां गुरु सुन न सकें वहां कोई बात न कहे ॥ २०३ ॥

गोऽश्वोष्ट्रयानप्रासादस्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्धं शिलाफलकनौषु च ॥ २०४ ॥

यानशब्दः प्रत्येकमभिसम्बध्यते । बलीवर्दयाने, घोटकप्रयुक्ते याने, उष्ट्रयुक्तयाने, रथकाष्ठादौ, प्रासादोपरि, स्रस्तरे, कटे च तृणादिकृते वीरणादिनिर्मिते, शिलायां, फलके च दारुघटितदीर्घासने, नौकायां च गुरुणा सह आसीत ॥ २०४ ॥

बैल, घोड़ा, ऊंट या अन्य सवारीपर तथा महलमें बिछाई चटाइयोंपर और शिला, तखत तथा नौकापर गुरुके साथ बैठ जाय तो भी कोई आपत्ति नहीं ॥ २०४ ॥

गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ।
न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥ २०५ ॥

आचार्यस्याचार्ये सन्निहिते आचार्य इव तस्मिन्नप्यभिवादनादिकां वृत्तिमनुतिष्ठेत् । तथा गुरुगृहे वसन् शिष्य आचार्येणानियुक्तो न स्वान् गुरून् मातृपितृव्यादीनभिवादयेत् ॥ २०५ ॥

संयोगवश यदि गुरुके गुरु पास हों तो उनके साथ भी गुरुके समान ही बर्ताव करे और गुरुसे आज्ञा लिये बिना अपने बड़ों अर्थात् मातापिता आदिको भी प्रणाम न करे ॥ २०५ ॥

विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु चाधर्माद्धितं चोपदिशत्स्वपि ॥ २०६ ॥

आचार्यव्यतिरिक्ता उपाध्यायादयो विद्यागुरवः तेष्वेतदेवेति सामान्योपक्रमः । किं तत्? आचार्य इव नित्या सार्वकालिकी वृत्तिर्विधेया । तथा स्वयोनिष्वपि पितृव्यादिषु तद्वृत्तिः तथा अधर्मान्निषेधत्सु धर्मतत्त्वं चोपदिशत्सु गुरुवद्वर्तितव्यम् ॥ २०६ ॥

विद्या पढ़ानेवालोंसे सदा यही बर्ताव करना चाहिये और अपने वंशवालोंसे, अधर्मका निषेध करनेवालोंसे और धर्मका उपदेश करनेवालोंसे भी यही बर्ताव करना उचित है॥ २०६॥

**श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ।**
**गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबन्धुषु ॥ २०७ ॥**

श्रेयःसु विद्यातपःसमृद्धेषु, आर्येष्विति गुरुपुत्रविशेषणम्। समानजातिगुरुपुत्रेषु गुरोश्च ज्ञातिष्वपि पितृव्यादिषु सर्वदा गुरुवद् वृत्तिमनुतिष्ठेत्। गुरुपुत्रश्चात्र शिष्याधिकवयाश्च बोद्धव्यः। शिष्यबालसमानवयसामनन्तरं शिष्यस्य वक्ष्यमाणत्वात्॥२:७॥

अपने से बड़े लोगोंमें, श्रेष्ठ गुरुपुत्रोंमें और गुरुके बन्धुबान्धवोंमें नित्य गुरुके समान ही बर्ताव करे॥ २०७॥

**बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि ।**
**अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥ २०८ ॥**

कनिष्ठः सवया वा ज्येष्ठोऽपि वा शिष्योऽध्यापयन्नध्यापनसमर्थः, गृहीतवेद इत्यर्थः। स यज्ञकर्मणि ऋत्विगनृत्विग्वा यज्ञदर्शनार्थमागतो गुरुवत्पूजामर्हति॥ २०८॥

गुरुका पुत्र छोटा हो या बराबरी की अवस्था का हो अथवा यज्ञविद्यादिमें शिष्य ही क्यों न हो, यदि वह वेदके पढ़ानेमें समर्थ हो तो उसका सदा गुरुके समान सम्मान करना चाहिये॥ २०८॥

आचार्यवदित्यविशेषेण पूजायां प्राप्तायां विशेषमाह—

**उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने ।**
**न कुर्याद् गुरुपुत्रस्य पादयोश्चावनेजनम् ॥ २०९ ॥**

गात्राणामुत्सादनमुद्वर्तनम्, उच्छिष्टस्य भक्षणं, पादयोश्च प्रक्षालनं गुरुपुत्रस्य न कुर्यात्॥ २०९॥

गुरुपुत्रके अंगोंमें उबटन लगाना, उसे स्नान कराना, उसका जूठा भोजन और उसके चरणोंका धोना, यह सब काम न करे॥ २०९॥

**गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।**
**असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥ २१० ॥**

सवर्णा गुरुपत्न्यः गुरुवदाज्ञाकरणादिना पूज्या भवेयुः। असवर्णाः पुनः केवलप्रत्युत्थानाभिवादनैः॥ २१०॥

सवर्ण गुरुपत्नियां, गुरुके समान पूज्य हैं और अन्य जातिकी हो तो अभ्युत्थान और प्रणामसे सत्कारके योग्य होती हैं ॥ २१० ॥

**अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च ।**
**गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥ २११ ॥**

तैलादिना देहाभ्यङ्गः, स्नापनं, गात्राणां चोद्वर्तनं, केशानां च माल्यादिना प्रसाधनमेतानि गुरुपत्न्या न कर्तव्यानि । केशानामिति प्रदर्शनमात्रार्थं देहस्यापि चन्दनादिना प्रसाधनं न कुर्यात् ॥ २११ ॥

गुरुपत्नी को तैलमर्दन, स्नान, अङ्गोंपर उबटन और बालोंपर सुगन्ध लगाना, ये काम त्याग दे ॥ २११ ॥

**गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।**
**पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २१२ ॥**

युवतिर्गुरुपत्नी पादयोरुपसङ्गृह्य अभिवादनदोषगुणज्ञेन यूना नाभिवाद्या । पूर्णविंशतिवर्षत्वं यौवनप्रदर्शनार्थम् । बालस्य पादयोरभिवादनमनिषिद्धम् । यूनस्तु भूमावभिवादनं वक्ष्यति ॥ २१२ ॥

इस जगत्में पूरे बीस वर्षके तथा गुण दोष जानने वाले शिष्यको चाहिये कि तरुण गुरुपत्नीके चरणोंमें गिरकर प्रणाम नहीं करे ॥ २१२ ॥

**स्वभाव एष नारीणां नराणामिह दूषणम् ।**
**अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३ ॥**

स्त्रीणामयं स्वभावः यदिह श्रृङ्गारचेष्टया व्यामोह्य पुरुषाणां दूषणम् । अतोऽर्थादस्माद्धेतोः पण्डिताः स्त्रीषु न प्रमत्ता भवन्ति ॥ २१३ ॥

इस संसार में पुरुषों को कलङ्कित करना स्त्रियों का स्वभाव होता है । इसलिये पण्डितजन कभी भी असावधान नहीं रहते ॥ २१३ ॥

**अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।**
**प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ २१४ ॥**

विद्वानहं जितेन्द्रिय इति बुद्ध्या न स्त्रीसन्निधिर्विधेयः । यस्मादविद्वांसं विद्वांसमपि वा पुनः पुरुषं देहधर्मात्कामक्रोधवशानुयायिनं स्त्रिय उत्पथं नेतुं समर्थाः ॥

क्योंकि स्त्रियां मूर्ख को अथवा काम क्रोधके वशीभूत पण्डित को भी बुरे मार्ग में ले जाने के लिये समर्थ होती हैं ॥ २१४ ॥

अत आह—

**मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।**
**बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ २१५ ॥**

मात्रा, भगिन्या, दुहित्रा, निर्जनगृहादौ नासीत । यतोऽतिबल इन्द्रिय-गणः शास्त्रनियमितात्मानमपि पुरुषं परवशं करोति ॥ २१५ ॥

मनुष्य को चाहिये कि माता, बहिन वा लड़की के साथ एकान्त में न बैठे, क्योंकि बलवान् इन्द्रियों का समूह पण्डितजनों को भी पाप में खैंच लेता है ॥ २१५ ॥

**कामं तु गुरुपत्नीनां युवतीनां युवा भुवि ।**
**विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥ २१६ ॥**

कामं तु गुरुपत्नीनां युवतीनां स्वयमपि युवा यथोक्तविधिना । "अभिवादयेऽमुकशर्माहं भोः" इति ब्रुवन् पादग्रहणं विना यथेष्टमभिवादनं कुर्यात् ॥ २१६ ॥

तरुण शिष्य को उचित है कि तरुणी गुरु-पत्नी को "मैं अमुक व्यक्ति हूं" ऐसा कहता हुआ पृथ्वी में झुक कर विधिवत् प्रणाम करे ॥ २१६ ॥

**विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।**
**गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ २१७ ॥**

प्रवासादागत्य सव्येन सव्यं दक्षिणेन च दक्षिणमित्युक्तविधिना पादग्रहणं, प्रत्यहं भूमावभिवादनं च गुरुपत्नीषु युवा कुर्यात् । शिष्टानामयमाचार इति जानन्तु २१७

शिष्य, सज्जनों के धर्मका स्मरण करता हुआ परदेश से आकर गुरुपत्नियों का चरणस्पर्श करे और उन्हें नित्य प्रणाम करे ॥ २१७ ॥

उक्तस्य शुश्रूषाविधेः फलमाह—

**यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।**
**तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ २१८ ॥**

यथा कश्चिन्मनुष्यः खनित्रेण भूमिं खनन् जलं प्राप्नोति, एवं गुरौ स्थितां विद्यां गुरुसेवापरः शिष्यः प्राप्नोति ॥ २१८ ॥

जिस प्रकार मनुष्य फावड़े से पृथ्वी को खोदता हुआ जल पाता है, उसी भांति सेवा करने वाला शिष्य गुरु के पास की विद्या प्राप्त करता है ॥ २१८ ॥

ब्रह्मचारिणः प्रकारत्रयमाह—

**मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः ।**

**नैनं ग्रामेऽभिनिम्लोचेत्सूर्यो नाभ्युदियात्कचित् ॥ २१९ ॥**

मुण्डितमस्तकः, शिरःकेशो जटावान्वा, शिखैव वा जटा जाता यस्य, एनं ब्रह्मचारिणं क्वचिद् ग्रामे निद्राणम्, उत्तरत्र शयानमिति दर्शनात्सूर्यो नाभिनिम्लोचेन्नास्तमियात् ॥ २१९ ॥

ब्रह्मचारी मूड़ मुड़ाये या जटा रखाये हो अथवा शिखा की ही जटा बनाये हो; पर गांव में रहते न तो कभी सूर्य छिपे और न उदय हो अर्थात् सूर्योदय से पहिले गांव में न जाय और सूर्य अस्त होने के बाद किसी गांव में न रहे ॥ २१९ ॥

अत्र प्रायश्चित्तमाह—

**तं चेदभ्युदियात्सूर्यः शयानं कामचारतः ।**
**निम्लोचेद्वाऽप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ २२० ॥**

तं चेत्कामतो निद्राणं निद्रोपवशत्वेन सूर्योऽभ्युदियादस्तमियात्तदा सावित्रीं जपन्नुभयत्रापि दिनमुपवसन् रात्रौ भुञ्जीत । अभिनिर्युक्तस्योत्तरेऽहनि उपवासजपौ । "अभिरभागे" ( पा. सू. १।४।९१ ) इति कर्मप्रवचनीयसंज्ञा, ततः कर्मप्रवचनीययुक्ते द्वितीया । सावित्रीजपं तु गोतमवचनात् तदाह गोतमः-"सूर्याभ्युदितो ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽभ्यस्तमितश्च रात्रिं जपन्सावित्रीम्" । ननु गोतमवचनात्सूर्याभ्युदितस्यैव दिनभोजनजपावुक्तौ, अभ्यस्तमितस्य तु रात्र्यभोजनजपौ, नैतत्, अपेक्षायां व्याख्यासन्देहे वा मुन्यन्तरविवृतमर्थमन्वयं वाऽऽश्रयामहे न तु स्फुटं मन्वर्थं स्मृत्यन्तरदर्शनादन्यथा कुर्मः । अत एव जपापेक्षायां गोतमवचनात्सावित्रीजपोऽभ्युपेय एव, न तूभयत्र स्फुटं मनूक्तं दिनोपवासजपावपाकुर्मः । तस्मादभ्यस्तमितस्य मानवगोतमीयप्रायश्चित्तविकल्पः ॥ २२० ॥

कदाचित् इच्छापूर्वक सोते समय ही सूर्य उदय हो जाय वा अस्त हो जाय तो गायत्री को जपता हुआ दिनभर व्रत करे ॥ २२० ॥

अस्य तु प्रायश्चित्तविधेरर्थवादमाह—

**सूर्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः ।**
**प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा ॥ २२१ ॥**

यस्मात्सूर्येणाभिनिर्मुक्तोऽभ्युदितश्च निद्राणः प्रायश्चित्तमकुर्वन्महता पापेन युक्तो नरकं गच्छति । तस्माद्यथोक्तप्रायश्चित्तं कुर्यात् ॥ २२१ ॥

यदि सोते हुए सूर्य अस्त या उदय हो जायं तो प्रायश्चित्त न करने से उसे बडा पाप होता है ॥ २२१ ॥

यस्मादुक्तप्रकारेण संध्याऽतिक्रमे महत्पापमतः—

**आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः ।**
**शुचौ देशे जपञ्जप्यमुपासीत यथाविधि ॥ २२२ ॥**

आचम्य पवित्रो नित्यमनन्यमनाः शुचिदेशे सावित्रीं जपन्नुभे सन्ध्ये विधिवदुपासीत ॥ २२२ ॥

पवित्र और सावधान ब्रह्मचारी आचमन करके शुद्ध स्थानमें गायत्री को विधिपूर्वक जपता हुआ दोनों सन्ध्याओंमें उपासना करे ॥ २२२ ॥

**यदि स्त्री यद्यवरजः श्रेयः किञ्चित्समाचरेत् ।**
**तत्सर्वमाचरेद्युक्तो यत्र वाऽस्य रमेन्मनः ॥ २२३ ॥**

यदि स्त्री शूद्रो वा किञ्चिच्छ्रेयोऽनुतिष्ठति तत्सर्वं युक्तोऽनुतिष्ठेत् । यत्र च शास्त्रानिषिद्धे मनोऽस्य तुष्यति तदपि कुर्यात् ॥ २२३ ॥

यदि स्त्री अथवा शूद्र कुछ अच्छा काम करें तो उन सबको अथवा जिसमें जिसका मन लगे उसे सावधान मनसे करे ॥ २२३ ॥

श्रेय एव हि धर्मार्थौ तद्दर्शयति—

**धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।**
**अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः २२४ ॥**

धर्मार्थौ श्रेयोऽभिधीयते कामहेतुत्वादिति केचिदाचार्या मन्यन्ते । अन्ये त्वर्थकामौ सुखहेतुत्वाच्छ्रेयोऽभिधीयते । धर्म एवेत्यपरे, अर्थकामयोरप्युपायत्वात् । अर्थ एवेह लोके श्रेय इत्यन्ये, धर्मकामयोरपि साधनत्वात् । सम्प्रति स्वमतमाह— धर्मार्थकामात्मकः परस्पराविरुद्धस्त्रिवर्ग एव पुरुषार्थतया श्रेय इति विनिश्चयः । एवं च बुभुक्षून्प्रत्युपदेशो न मुमुक्षून् । मुमुक्षूणां तु मोक्ष एव श्रेय इति षष्ठे वक्ष्यते ॥२२४॥

इस संसारमें कितने ही ( आचार्य ) धर्म और अर्थको कल्याणरूप कहते हैं, कितने ही काम और अर्थको, और कितने ही धर्मको अथवा अर्थ ही को कल्याणरूप कहते हैं; परन्तु धर्म अर्थ और काम ये तीनों कल्याणरूप हैं । यह महान् पुरुषों का सिद्धान्त हैं ॥ २२४ ॥

**आचार्यश्च पिता चैव माता भ्राता च पूर्वजः ।**
**नार्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ॥ २२५ ॥**

आचार्यो, जनको, जननी, च भ्राता च सगर्भो ज्येष्ठः पीडितेनाप्यमी नावमाननीयाः । विशेषतो ब्राह्मणेन यस्मात् ॥ २२५ ॥

दुःखी मनुष्य भी आचार्य, पिता, माता और बड़ा भाई इनका अपमान न करे और विशेषकर ब्राह्मण तो कभी किसी का अपमान करे ही नहीं ॥ २२५ ॥

**आचार्यो ब्रह्मणो मूर्तिः, पिता मूर्तिः प्रजापतेः ।**
**माता पृथिव्या मूर्तिस्तु, भ्राता स्वो मूर्तिरात्मनः ॥२२६॥**

आचार्यो वेदान्तोदितस्य ब्रह्मणः परमात्मनो मूर्तिः शरीरं, पिता हिरण्यगर्भस्य, माता च धारणात्पृथिवीमूर्तिः , भ्राता च स्वः सगर्भः क्षेत्रज्ञस्य । तस्माद्देवतारूपा एता नावमन्तव्याः ॥ २२६ ॥

आचार्य परमात्माकी मूर्ति, पिता ब्रह्माकी मूर्ति, माता पृथ्वीकी मूर्ति और भाई साक्षात् अपनी ही मूर्ति है ॥ २२६ ॥

**यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम् ।**
**न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ २२७ ॥**

नृणामपत्यानां सम्भवे गर्भाधाने सति अनन्तरं यं क्लेशं मातापितरौ सहेते तस्य वर्षशतैरप्यनेकैरपि जन्मभिरानृण्यं कर्तुमशक्यम् । मातुस्तावत्कुक्षा धारणदुःखं, प्रसववेदनाऽतिशयो, जातस्य रक्षणवर्धनकष्टं च पितुरधिकान्येव । रक्षासंवर्धनदुःखं, उपनयनात्प्रभृति वेदतदङ्गाध्यापनादिक्लेशातिशय इति सर्वसिद्धं तस्मात् ॥२२७॥

मनुष्यकी उत्पत्ति के समय में जो क्लेश माता-पिता सहते हैं, उसका बदला सौ वर्षोंमें भी नहीं चुकाया जा सकता ॥ २२७ ॥

**तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ।**
**तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ २२८ ॥**

तयोर्मातापित्रोः प्रत्यहमाचार्यस्य च सर्वदा प्रीतिमुत्पादयेत् । यस्मात्तेष्वेव त्रिषु प्रीतेषु सर्वतपश्चान्द्रायणादिकं फलद्वारेण सम्यक्प्राप्यते मात्रादित्रयतुष्ट्यैव सर्वस्य तपसः फलं प्राप्यत इत्यादि ॥ २२८ ॥

इसलिये नित्य उन दोनोंकी और आचार्यकी मङ्गल कामना करे उन्हीं तीनों के तुष्ट होनेपर सब तप समाप्त हो जाता है ॥ २२८ ॥

**तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ।**
**न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ॥ २२९ ॥**

तेषां मातापित्राचार्याणां परिचर्या सर्वं तपोमयं श्रेष्ठमत एव सर्वतपःफलप्राप्तेर्यद्यन्यमपि धर्मं कथञ्चित्करोति तदप्येतत्त्रयानुमतिव्यतिरेकेण न कुर्यात् ॥२२९॥

इन तीनोंकी सेवा ही बड़ा भारी तप कहा गया है। इन तीनों की आज्ञा बिना शिष्य किसी भी अन्य कर्मको न करे ॥ २२९ ॥

**त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ।**
**त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ २३० ॥**

यस्मात्त एव मातापित्राचार्यास्त्रयो लोकाः, लोकत्रयप्राप्तिहेतुत्वात्। कारणे कार्योपचारः। त एव ब्रह्मचर्यादिभावत्रयरूपा आश्रमाः, गार्हस्थ्याद्याश्रमत्रयप्रदायकत्वात्। त एव त्रयो वेदाः, वेदत्रयजपफलोपायत्वात्। त एव हि त्रयोऽग्नयोऽभिहितास्त्रेतासम्पाद्ययज्ञादिफलदातृत्वात्॥ २३० ॥

क्योंकि वे ही तीनों लोक, वे ही तीनों आश्रम, वे ही तीनों वेद और वे ही तीनों अग्नि कहे गये हैं ॥ २३० ॥

**पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः ।**
**गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ २३१ ॥**

वैशब्दोऽवधारणे। पितैव गार्हपत्योऽग्निः, माता दक्षिणाग्निः, आचार्य आहवनीयः। सेयमग्नित्रेता श्रेष्ठतरा। स्तुत्यर्थत्वाच्चास्य न वस्तुविरोधोऽत्र भावनीयः ॥ २३१ ॥

पिता गार्हपत्य अग्नि, माता दक्षिणाग्नि तथा गुरु आहवनीय अग्नि है, ऐसा कहा है और वह अग्निसमूह अतिशय श्रेष्ठ है ॥ २३१ ॥

**त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोकान्विजयेद् गृही ।**
**दीप्यमानः स्ववपुषा देववद्दिवि मोदते ॥ २३२ ॥**

एतेषु त्रिषु प्रमादमकुर्वन्ब्रह्मचारी तावज्जयत्येव गृहस्थोऽपि त्रींल्लोकान्विजयते। संज्ञापूर्वकस्यात्मनेपदविधेरनित्यत्वान्न "विपराभ्यां जेः" (पा. सू. १।३।१९) इत्यात्मनेपदम्। त्रींल्लोकान्विजयेदिति त्रिष्वाधिपत्यं प्राप्नोति। तथा स्ववपुषा प्रकाशमानः सूर्यादिदेववद्दिवि हृष्टो भवति ॥ २३२ ॥

गृहस्थ मनुष्य इन तीनोंमें सावधान रहने से तीनों लोकोंको जीतता है और अपने शरीर से तेजस्वी होता हुआ स्वर्गमें देवता के समान प्रसन्न होता है ॥ २३२ ॥

**इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ।**
**गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते ॥ २३३ ॥**

इमं भूलोकं मातृभक्त्या। मध्यममन्तरिक्षम्। आचार्यभक्त्या तु हिरण्यगर्भलोकमेव प्राप्नोति ॥ २२३ ॥

माताकी भक्तिसे इस लोकको, पिताकी भक्तिसे मध्य लोकको तथा गुरुकी भक्तिसे मनुष्य ब्रह्मलोकको पाता है ॥ २३३ ॥

**सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।**
**अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ २३४ ॥**

यस्यैते त्रयो मातृपित्राचार्या आदृताः सत्कृतास्तस्य सर्वे धर्माः फलदा भवन्ति । यस्य ते त्रयोऽनादृतास्तस्य सर्वाणि श्रौतस्मार्तकर्माणि निष्फलानि भवन्ति ॥ २३४ ॥

जिसने इन तीनोंका आदर किया, उसने सब धर्मोंका आदर किया और जिसने इनका अनादर किया, उसके सब काम निष्फल हो जाते हैं ॥ २३४ ॥

**यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत् ।**
**तेष्वेव नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः ॥ २३५ ॥**

ते त्रयो यावज्जीवन्ति तावदन्यं धर्मं स्वातन्त्र्येण नानुतिष्ठेत् । तदनुज्ञया तु धर्मानुष्ठानं प्राग्विहितमेव । किन्तु तेष्वेवं प्रत्यहं प्रियहितपरः शुश्रूषां कुर्यात् तदर्थे प्रीतिसाधनं प्रियम् । भेषजपानादिवदायत्यामिष्टसाधनं हितम् ॥ २३५ ॥

जबतक ये तीनों जीवें तबतक कोई दूसरा धर्म न करे, उन्हींकी प्रीति और हित चाहता हुआ नित्य उनकी सेवामें संलग्न रहे ॥ २३५ ॥

**तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत् ।**
**तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः ॥ २३६ ॥**

तेषां शुश्रूषाया अविरोधेन तदनुज्ञातो यद्यन्मनोवचनकर्मभिः परलोकफलं कर्मानुष्ठितं तन्मयतदनुष्ठितमिति पश्चात्तेभ्यो निवेदयेत् ॥ २३६ ॥

उनके कहनेसे परलोकके लिये मन, वाणी और कर्मसे आचरण जो जो करे, वह उन्हींके निमित्त अर्पण कर दे ॥ २३६ ॥

**त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते ।**
**एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते ॥ २३७ ॥**

इतिशब्दः कार्त्स्न्ये । हिशब्दो हेतौ । यस्मादेतेषु पुरुषस्य सर्वं श्रौतं स्मार्तं कर्तव्यं सम्पूर्णमनुष्ठितं भवति, तत्फलावाप्तेः । तस्मादेव श्रेष्ठो धर्मः साक्षात्सर्वपुरुषार्थसाधनः । अन्यस्त्वग्निहोत्रादिप्रतिनियतस्वर्गादिहेतुरुपधर्मो जघन्यधर्म इति शुश्रूषास्तुतिः ॥ २३७ ॥

क्योंकि इन तीनोंकी सेवासे पुरुषका सब कर्म सफल होता है, यही परम धर्म है, इसके अतिरिक्त अन्य सब धर्म उपधर्म कहे जाते हैं ॥ २३७ ॥

**श्रद्दधानः शुभां विद्यामाददीतावरादपि।**
**अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥ २३८ ॥**

श्रद्धायुक्तः शुभां दृष्टशक्तिं गारुडादिविद्यामवराच्छूद्रादपि गृह्णीयात्। अन्त्यश्चाण्डालस्तस्मादपि जातिस्मरादेर्विहितयोगप्रकर्षात् दुष्कृतशेषोपभोगार्थमवाप्तचाण्डालजन्मनः परं धर्मं मोक्षोपायमात्मज्ञानमाददीत। तथा अज्ञानमेवोपक्रम्य मोक्षधर्मे "प्राप्य ज्ञानं ब्राह्मणात्क्षत्रियाद्वैश्याच्छूद्रादपि नीचादभीक्ष्णं श्रद्धातव्यं श्रद्दधानेन नित्यम्।" न श्रद्धिनं प्रति जन्ममृत्युविशेषता। मेधातिथिस्तु "श्रुतिस्मृत्यपेक्षया परो धर्मो लौकिकः। धर्मशब्दो व्यवस्थायामपि युज्यते। यदि चाण्डालोऽपि 'अत्र प्रदेशे मा चिरं स्था, मा चास्मिन्नम्भसि स्नासीः' इति वदति तमपि धर्ममनुतिष्ठत्।"

प्रागल्भ्याल्लौकिकं वस्तु परं धर्ममिति ब्रुवन्।
चित्रं तथापि सर्वत्र श्लाघ्यो मेधातिथिः सताम् ॥

स्त्रीरत्नं आत्मापेक्षया निकृष्टकुलादपि परिणेतुं स्वीकुर्यात् ॥ २३८ ॥

नीचसे भी श्रद्धापूर्वक अच्छी विद्याको, चाण्डालसे भी परम धर्मको और नीच कुल से भी स्त्रीरत्नको ग्रहण करलेना चाहिए ॥ २३८ ॥

**विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्।**
**अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ २३९ ॥**

विषं यद्यमृतसंयुक्तं भवति तदा विषमपसार्य तस्मादमृतं ग्राह्यम्। बालादपि हितवचनं ग्राह्यं, शत्रुतोऽपि सज्जनवृत्तं, अमेध्यादपि सुवर्णादिकं ग्रहीतव्यम् ॥ २३९ ॥

विषसे भी अमृत को, बालकसे भी सुन्दर वचन को, वैरी से भी सुन्दर आचरणको और अशुद्ध जगह से भी सुवर्ण ले लेना बुद्धिमानी है ॥ २३९ ॥

**स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम्।**
**विविधानि च शिल्पानि समादेयानि सर्वतः ॥ २४० ॥**

अत्र स्त्र्यादीनामुक्तानामपि दृष्टान्तत्वेनोपादानम्। यथा स्त्र्यादयो निकृष्टकुलादिभ्यो गृह्यन्ते तथा अन्यान्यपि हितानि चित्रलिखनादीनि सर्वतः प्रतिग्रहीतव्यानि ॥ २४० ॥

स्त्री, रत्न, विद्या, धर्म, पवित्रता, सुन्दर वचन और अनेक प्रकारकी कारीगरी, इनको सबसे ग्रहण कर लेना चाहिये ॥ २४० ॥

**अब्राह्मणादध्ययनमापत्काले विधीयते ।**
**अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥ २४१ ॥**

ब्राह्मणादन्यो यो द्विजः क्षत्रियस्तदभावे वैश्यो वा तस्मादध्ययनमापत्काले ब्राह्मणाध्यापकासम्भवे ब्रह्मचारिणो विधीयते । अनुव्रजादिरूपा गुरोः शुश्रूषा यावदध्ययनं तावत्कार्या । गुरुपादप्रक्षालनोच्छिष्टप्राशनादिरूपा शुश्रूषा प्रशस्ता सा न कार्या। तदर्थमनुव्रज्या चेति विशेषितम्। गुरुत्वमपि यावदध्ययनमेव क्षत्रियस्याह व्यासः—

"मन्त्रदः क्षत्रियो विप्रैः शूश्रुषानुगमादिना ।
प्राप्तविद्यो ब्राह्मणस्तु पुनस्तस्य गुरुः स्मृतः" ॥ २४१ ॥

आपत्काल में क्षत्रिय आदिसे भी पढ़ना कहा है, परन्तु उस गुरुका अनुगमन और जबतक पढ़ता रहे तबतक ही सेवा करे, सर्वदा नहीं ॥ २४१ ॥

ब्रह्मचारित्वे नैष्ठिकस्याप्यब्राह्मणादध्ययनं प्रसक्तं प्रतिषेधयति—

**नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।**
**ब्राह्मणे चाननूचाने काङ्क्षन्गतिमनुत्तमाम् ॥ २४२ ॥**

आत्यन्तिकं वासं यावज्जीविकं ब्रह्मचर्यं क्षत्रियादिके गुरौ ब्राह्मणे साङ्गवेदानध्येतरि अनुत्तमां गतिं मोक्षलक्षणमिच्छन् शिष्यो नावतिष्ठेत ॥ २४२ ॥

**यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले ।**
**युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥ २४३ ॥**

यदि तु गुरोः कुले नैष्ठिकब्रह्मचर्यात्मकमात्यन्तिकं वासमिच्छेत्तदा यावज्जीवनमुद्युक्तो गुरुं शुश्रूषयेत ॥ २४३ ॥

उत्तम गति चाहने वाले शिष्यको चाहिये कि जो ब्राह्मण न हो और जो अंगसहित वेद न जानता हो, उसके पास ब्रह्मचर्य के लिये न बसे । जो ब्रह्मचारी गुरुके कुलमें अपने जीवनभर वास करना चाहे तो शरीरके अन्ततक सावधानीसे गुरुकी सेवा करे ॥२४२-२४३॥

अस्य फलमाह—

**आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् ।**
**स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥२४४॥**

समाप्तिः शरीरस्य जीवनत्यागस्तत्पर्यन्तं यो गुरुं परिचरति स तत्त्वतो ब्रह्मणः सद्म रूपमविनाशि प्राप्नोति । ब्रह्मणि लीयत इत्यर्थः ॥ २४४ ॥

जो ब्रह्मचारी शरीर की समाप्ति तक गुरु की सेवा करता है, वह शीघ्र ही ब्रह्म के शाश्वत स्थानको प्राप्त होता है ॥ २४४ ॥

**न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित्।**
**स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥२४५॥**

उपकुर्वाणस्यायं विधिः, नैष्ठिकस्य स्नानासम्भवात्। गुरुदक्षिणादानं धर्मज्ञो ब्रह्मचारी स्नानात्पूर्वं किञ्चिद्गोवस्त्रादि धनं गुरवे नावश्यं दद्यात्। यदि तु यदृच्छातो लभते तदा गुरवे दद्यादेव। अत एव स्नानात्पूर्वं गुरवे दानमाह-आपस्तम्बः—"यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणा एव ताः स एव ब्रह्मचारिणो यज्ञो नित्यव्रतम्"इति। स्नास्यन्पुनर्गुरुणा दत्ताज्ञो यथाशक्ति धनिनं याचित्वापि प्रतिग्रहादिनापि गुरवेऽर्थमाहृत्यावश्यं दद्यात्॥ २४५॥

धर्मका ज्ञाता शिष्य पहिले गुरु को कुछ दक्षिणा न दे, परन्तु जब गुरुकी आज्ञानुसार व्रत समाप्त करके स्नान करे तो गुरुके लिये यथाशक्ति भेंट लावे॥ २४५॥

किं तत्तदाह—

**क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्।**
**धान्यं शाकं च वासांसि गुरवे प्रीतिमावहेत्॥ २४६॥**

"शक्त्या गुर्वर्थमाहरेत्" (अ. २ श्लो. २४५) इत्युक्तत्वात्क्षेत्रहिरण्यादिकं यथासामर्थ्यं विकल्पितं समुदितं वा गुरवे दत्त्वा तत्प्रीतिमर्जयेत्। विकल्पपक्षे चान्ततोऽन्यासम्भवे छत्रोपानहमपि दद्यात्, द्वन्द्वनिर्देशात्। समुदितदानं प्रदर्शनार्थं चैतत्। सम्भवेऽन्यदपि दद्यात्। अत एव लघुहारितः—

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा चानृणी भवेत्॥

असम्भवे शाकमपि दद्यात्॥ २४६॥

भूमि, सुवर्ण, गौ, घोड़ा, छतरी, जूता, आसन, अन्न, शाक और कपड़े ये गुरुके लिये प्रीति पूर्वक लावे॥ २४६॥

**आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते।**
**गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत्॥ २४७॥**

नैष्ठिकस्यायमुपदेशः आचार्ये मृते तत्सुते विद्यादिगुणयुक्ते, तदभावे गुरुपत्न्यां, तदभावे गुरोः सपिण्डे पितृव्यादौ गुरुवच्छुश्रूषामनुतिष्ठेत्॥ २४७॥

आचार्यके मरजानेपर गुणवान् गुरुपुत्रमें, गुरुपत्नीमें अथवा गुरुके सपिण्ड लोगोंमें गुरुके समान ही वर्ताव करे॥ २४७॥

**एतेष्वविद्यमानेषु स्नानासनविहारवान् ।**
**प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ २४८ ॥**

एतेषु त्रिष्वविद्यमानेषु सततमाचार्यस्यैवाग्नेः समीपे स्नानासनविहारैः सायम्प्रातरादौ समिद्धोमादिना चाग्नेः शुश्रूषां कुर्वन्नात्मनो देहमात्मदेहावच्छिन्नं जावं ब्रह्मप्राप्तियोगं साधयेत् ॥ २४८ ॥

इनके अभाव में आचार्य के अग्नि के पास ही स्नान, आसन, विहार और अग्निकी सेवा करता हुआ अपनी देहको साधे ॥ २४८ ॥

**एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः ।**
**स गच्छत्युत्तमस्थानं न चेहाजायते पुनः ॥ २४९ ॥**

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वितीयोऽध्यायः ॥ २ ॥

"आ समाप्तेः शरीरस्य" ( अ. २ श्लो. २२४ ) इत्यनेन यावज्जीवमाचार्यशुश्रूषाया मोक्षलक्षणं फलम् । इदानीमाचार्ये मृतेऽपि एवमित्यनेनानन्तरोक्तविधिना आचार्यपुत्रादीनामप्यग्निपर्यन्तानां शुश्रूषको यो नैष्ठिकब्रह्मचर्यमखण्डितव्रतोऽनुतिष्ठति स उत्तमं स्थानं ब्रह्मण्यात्यन्तिकलक्षणं प्राप्नोति । न चेह संसारे कर्मवशादुत्पत्तिं लभते ॥ २४९ ॥ क्षे० ॥ ११ ॥

इति श्रीकुल्लूकभट्टकृतायां मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वितीयोऽध्यायः ॥ २ ॥

जो ब्राह्मण विचलित न होकर इस प्रकार ब्रह्मचर्यका पालन करता है, वह उत्तम स्थानको जाता है और इस संसार में फिर नहीं लौटता ॥ २४९ ॥

इति श्रीपण्डित जनार्दनशर्मप्रणीत 'सुबोधिनी' नामक हिन्दीटीका का

द्वितीयोऽध्यायः समाप्तः ।

# बिहारोत्कलसंस्कृतसमितेर्मध्यमायाः प्रश्नाः ।

१९२४

१ धर्मे प्रमाणानि तदनुष्ठाने फलं चाभिधीयताम् । १२

२ श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥
श्लोकोऽयं व्याख्यायताम् । १४

१९२५

१ श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥
इति श्लोकस्योदाहरणं प्रकृते उपयोगं च प्रदर्श्य व्याख्यानं क्रियताम् । १५

१९२६

१ एतयर्चा विसंयुक्तः काले च क्रियया स्वया ।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥
व्याख्यायतामयं श्लोकः । १०

२ अतिभोजने को दोषः ? कस्तावद् ब्रह्माञ्जलिः ? ५

१९२७

१ अर्थकामावेव हि धर्मस्य फलं तदशक्तस्य च धर्माचरणे किं प्रयोजनम् ?
इति शङ्का समाधीयताम् । ४

२ तं चेदभ्युदियात्सूर्य्यः शयानं कामचारतः ।
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥
सप्रकरणं पद्यमिदं व्याख्यात । १०

१९२८

१ त एव हि त्रयो लोकास्तएव त्रय आश्रमाः ।
त एव हि त्रयो वेदास्तएवोक्तास्त्रयोऽग्नयः ॥
पद्यमिदं व्याख्यायताम्, प्रदर्श्यताञ्च तच्छब्देन यस्य परामर्शः । १५

२ जितेन्द्रियः कः ? मध्यदेशः कः ? ५

१९२९

१ नैतरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद्ब्राह्मणः सह ॥
श्लोकमिमं प्रकरणं विषयञ्च निर्दिश्य स्फुटं व्याख्यात — १५
(क) पूतैः कैः? अपूतता कथम्? — ६

१९३०

१ कानि कियन्ति च करस्थानि तीर्थानि? तत्राचमनकर्मणि किं विहितम्! के च मध्यमे? किञ्च निषिद्धमिति सप्रमाणं निजसंस्कृतेन लिख । — १०
२ यश्चैतान्प्राप्नुयात्सर्वान्यश्चैतान् केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥
पद्यमिदं स्फुटार्थं व्याख्याहि । परित्यागः कथं विशिष्यते? — १०

१९३१

१ ब्रह्मावर्तमध्यदेशार्यावर्तानां लक्षणानि श्लोकार्थप्रदर्शनेन स्पष्टं लिखत । — १२
(क) पितुराचार्यस्य वा गरीयस्त्वं श्लोकार्थेन सप्रमाणं लिखत । — ४

१९३२

१ ब्रह्मर्षिदेश-यज्ञार्हदेशयोः स्वरूपपरिचयः श्लोकव्याख्यापुरस्सरं प्रदर्श्यताम् । — १०
२ आचार्योपाध्यायगुरूणां लक्षणानि मनूक्तानि सुबोधं लिख्यताम् । — १५

१९३३

१ अधस्तनाः श्लोकाः संस्कृतभाषया व्याख्यायन्ताम् । — ३५
(क) स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥
(ख) इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद् विद्वान् यन्तेव वाजिनाम् ॥
(ग) उत्पादकब्रह्मदात्रो गरीयान् ब्रह्मदः पिता ।
ब्रह्म जन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥
(घ) व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयाद् व्रतमस्य न लुप्यते ॥
(ङ) नाऽब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।
ब्राह्मणे चाननचाने काङ्क्षन् गतिमनुत्तमाम् ॥

## १९३४

१ अधस्तनाः श्लोकाः संस्कृतभाषया व्याख्यायन्ताम् ।

(क) वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ १ ॥

(ख) वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥ २ ॥

(ग) नापृष्टः कस्यचिद्ब्रूयान्नचान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ ३ ॥

(घ) नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते ।
शूद्रेण हि समस्तावद् यावद् वेदे न जायते ॥ ४ ॥

(ङ) श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥ ५ ॥

---

## १९३५

१ ब्रह्मावर्त-ब्रह्मर्षिदेश-मध्यदेशार्यावर्तानां मनूक्तानि लक्षणानि लिख्यन्ताम् । १०

२ एषप्रोक्तो द्विजातीनामौपनायनिको विधिः ।
उत्पत्तिव्यञ्जकः पुण्यः कर्मयोगं निबोधत ॥
सुबोधं व्याख्यायतामियं कारिका । १०

३ ऋत्विगाचार्योपाध्यायगुरूणां मनूक्तानि लक्षणानि विलिख्य, पित्राचार्य्ययोः कस्य कथम्वा श्रेष्ठत्वमिति विविच्यताम् । १५

---

## १९३६

१ (क) कामात्मता न प्रशस्ता नचवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥
सरल संस्कृतभाषया व्याख्यायतामयं श्लोकः । १०

(ख) नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान्यौनांश्चसम्बन्धानाचरेद् ब्राह्मणः सह ॥
सप्रकरणनिर्देशं सुबोधं व्याख्यायतामयं श्लोकः । १०

(ग) ब्राह्मणादिवर्णेषु केन हेतुना ज्येष्ठत्वं मनुसम्मतम्?
देवाः कं वृद्धं वदन्ति? स्पष्टमुल्लिख्यताम् । १५

---

१९३७

१ वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥
व्याख्यायतामयं श्लोकः । ११

अथवा

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा नपित्र्येण कदाचन ॥
व्याख्यायतामयंश्लोकः, प्रदर्श्यतांश्च कानि तानि तीर्थानीति ।
२ (क) विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुस्याच्छतगुणः साहस्रोमानसः स्मृतः ॥
योधीतेऽहन्यहन्येतां त्रीणिवर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥
पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥
सप्रकरणं व्याख्यायन्तामिमे श्लोकाः । २४

---

१९३८

१ अधस्तनेषु केऽपि त्रयःश्लोकाः सरलसंस्कृतभाषया व्याख्यायन्ताम् । तत्त-च्छ्लोकस्थरेखाङ्कितपदानामर्थाश्च स्पष्टं पृथक् निर्देश्याः । २५
(क) तेषु सम्यग्वर्तमानो गच्छत्यमरलोकताम् ।
यथा सङ्कल्पितांश्चेह सर्वान् कामान् समश्नुते ॥
(ख) स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥
(ग) एतयर्चा विसंयुक्तः काले च क्रियया स्वया ।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥
(घ) नारुन्तुदः स्यादार्तोऽपि न परद्रोहकर्मधीः ।
ययास्योद्विजते वाचा नालोक्यां तामुदीरयेत् ॥
१ ब्रह्मचारिणः कर्तव्यमवलम्ब्य मनूक्तदिशा संस्कृतभाषया संक्षिप्तः प्रबन्धो वि-रच्यताम् । १०

---

# कृत्यसारसमुच्चयः

## मैथिलशिरोमणि म. म. पं. अमृतनाथझा विरचित
## ज्योतिषाचार्य ज्योतिषकाव्यतीर्थ-
## मैथिलरत्न पं. गङ्गाधरमिश्रकृत बृहत् टिप्पणी तथा पच्चीसों परिशिष्टों से विभूषित धर्मशास्त्र का अमूल्य ग्रन्थ ।

यद्यपि कर्मकाण्डसम्बन्धी मैथिलपद्धति के अनेक ग्रन्थ हैं किन्तु उनमें यह ग्रन्थरत्न सर्वोपरि है । क्यों कि इसमें वर्षभरके सभी कृत्यों एवं अन्य धार्मिक विषयों का विवेचन अत्यन्त सरल तथा संक्षेपरूप से किया गया है और इसी के आधार पर मैथिलों के तथा मिथिलाप्रान्त निवासी अन्य ब्राह्मणादि धार्मिकजनों के कृत्य सुसंपन्न किये जाते हैं ।

ऐसा सर्वांग पूर्ण धर्मशास्त्र का छोटा सा ग्रन्थ दूसरा नहीं है यह निःसंकोच कहा जा सकता है । इस ग्रन्थ का अभाव कुछ वर्षों से असह्य था । यद्यपि इस का प्रकाशन अन्यत्र से हुआ है पर उसमें जहाँ तहाँ अनेक पंक्तियों के छूटने और भ्रममें डालने वाली जैसे 'यज्ञोपवीत' के जगह 'राजोपरि' 'चन्द्रमा' के जगह 'चन्द्रमा' आदि अनेक अशुद्धियों के रहजाने से यथार्थ निर्णय करना असम्भव सा था । अतः ग्रन्थकार के ग्राम (मु० चैनपुर जि० भागलपुर) के निवासी टिप्पणीकार ने दो हस्तलिखित पुस्तकों से परिशुद्धकर त्रुटियों को दूर कर दिया है एवं मूल ग्रन्थमें जिन जिन व्रतों और धार्मिक विषयों का विवेचन नहीं था उन सब की पूर्ति छः सात वर्षों के कठिन परिश्रम से अनेक प्राचीन निबन्धों के अनुसार विशद टिप्पणी तथा पच्चीसों परिशिष्ट द्वारा की है । जैसे चान्द्रायणव्रत, रविव्रत, नवरात्रव्रत, संक्रान्तिनिर्णय, भीष्मपञ्चक, उपनयननिर्णय और मिथिलाप्रान्तीय विवाद ग्रस्त मौंजीमेखलाधारणनिर्णय आदि । सर्व प्रिय होने का ध्यान रख नवीन शैली से गद्य पद्य तथा संबन्धपृथक् करके ग्रन्थका अत्युत्तम मुद्रण किया गया है ।

हमे पूर्ण आशा है कि प्रत्येक विद्वान् एवं संस्कृत के सामान्य योग्यता वाले महानुभाव भी इस ग्रन्थ रत्न की एक एक प्रति खरीदकर अपने घर को पवित्र करेंगे और सन्देह ग्रस्त विषयों का स्वयं निर्णय करके अपने कृत्य की परिशुद्धता से पुण्य के भागी बनेगें । धार्मिक ग्रन्थ के ख्याल से मूल्य लागत मात्र बड़े साईज के सवातीन सौ पृष्ठ की पुस्तक का १।।।) है ।

---

**प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।**